BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED

UNDER THE SUPERINTENDENCE

OF

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES,

Nos. 301, 321, 322, 323, 324, and 334.

# Sáma Veda Sanhitá,

WITH

THE COMMENTARY

OF

# SÁYANA ÁCHÁRYA.

EDITED BY

PANDITA SATYAVRATA SÁMAŚRAMÍ,

EDITOR OF THE HINDU COMMENTATOR.

VOL. II.

Calcutta.

PRINTED BY N. K. SIRCAR AT THE GANESA PRESS

1876.

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥

# [ अ ]

परिच्छेदः — पृष्ठ

परिच्छेदः पृष्ठ

परिच्छेदः

॥ नमः सामवेदाय ॥

# सामवेदसंहिता।

## अथ पञ्चमाध्यायः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्या-तीर्थ-महेश्वरम्॥ १ ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः।
उच्यतेऽस्मिन् गायत्र्यश्चत्वारिंशच्चतुर्युताः॥ २ ॥

---

गतमाग्नेयं पर्व, गतमैन्द्रम्; इदानीमिदं तृतीयं सम्प्रवर्त्तते। यत्र पर्वणि सोमस्य देवस्य संस्तुतिः श्रूयते, प्राधान्येनेति यावत्। अस्ति सोमः यज्ञार्थाभिषुतः ओषधि-विशेषः—

"सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम्।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन॥"
(ऋ० १०, ७, १, ४)

-इति श्रुतेः. "सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिमिति, इयासुतमसोम-माह—सोमं यं ब्रह्माणो विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्"—इति च यास्ककृत-तद्व्याख्यानात्। स एव सोमः पवमान इत्युच्यते पूयमान इति च तदर्थः। अस्ति च सोमश्चन्द्रमावाचकः, "सोमोऽरुपविशेषैरोषधिश्चन्द्रमा वा"—इत्यादि शाकोक्तेः (दै० ५, ५)। तदत्र एतस्य ग्रहणमित्याशङ्कां वारयितुं पवमानस्येति विशेषणम्। एतेन चन्द्रमसो व्यावृत्तिः। एवमेव पर्वणि यावन्त ऋचः सूक्ते विशेषोक्ते यथावे

तत्र प्रथमे खण्डे—

सैषा प्रथमा।

३ १ २.३ १ १ २र ३ १ २र

उच्चातेजातमन्धसोदिविसद्भूम्याददे*।

१ २उ ३ १ ३ १ २

उग्रᳫंशर्ममहिश्रवः॥ १॥ १†

५ ४ २ र र १ ७

ओम्॥ (आजिगम्॥) उच्चा। तेजा३तामन्धासा २ः।

१ र र २ १ २ १ २

दिविसद्भूम्याददाइ। उग्रᳫंशा२३र्मा ३। मा२हा२३४।

५र र २ २ ५

औहोवा। उ। आ२३४वाः॥ १॥

२ १र ५ २ १ ५

(आभीकम्॥) उच्चाते२३४जा। तमन्धा२३४साः।

---

सर्वासामेवासां पवमानः सोमो देवतेत्थं बोधितव्यं—पावमानं पर्वेति। "उच्चाते"-इति पञ्चम-द्वितीय-चतुर्थस्य प्रथमा ऋक्, इयमस्य पर्वणोऽपि प्रथमा; एतदादि-षष्ठ-प्रथम-द्वितीयाग्निमाम्नाः दशचतुष्टयात्मिकाः चतुर्दुताश्चत्वारिंशदृचः गायत्र्यः गायत्रीच्छन्दस्काः।

* "दिविसद्भू"-इति च॰।

† ऋ०१,१,८,१ = ऋ०७,१,१९,५=आर॰१,२,२२;—२,१,१९—२,१,२२= ऊ०१,१,१;—२,१,१२;—६,१,९—१०;—७,१,१२;—८,२,१२;—१०,१,१०—११;—११,१,१४;—१२,१,१—२;—१२,२,७;—१३,१,१७;—१५,१,३-४-५;—१९,१,११;—२०,१,६-७-८—९;—२०,२,१४=ऊह्य १,२,१।

हिवाइसा१२३४ङ्का । मियाददाइ । उग्रᳵशा२३र्मा १ महाये ३ । आ२वा३४ औहोवा । वा२३४५इ ॥ २ ॥

( ऋषभपावमानम् ॥ ) हाहाउच्चातिजा । हा३ । हा३इ । तामा२न्धा२३४साः । दिविसङ्कमिया१दा३दे । उग्रᳵशा२३४र्मा । ओमो३ । महोवा । आपुवोई हाइ ॥ ३ ॥

( आभीकम् ॥ ) ऊ२३४चातिजा५ । तमौहोन्धासाः । दिविसङ्कमिया१दा३दे । उग्रᳵशा२३४र्मा । माहा३उवा ३४३ । आ२३४५वोईहाइ ॥४॥

(वाभ्रवे द्वे ॥ ) उच्चातिजा । तम । धासा२३ः । ओमो३वा । दिविसङ्क । मियादा१दे२३ । ओमो३वा । उग्राᳵशा१र्मा २३ । ओमो३वा३ । म२ हा२३४औहोवा । अवाइ २३४५ ॥ ५ ॥

उच्चातिजा । तमन्धा२३साः । दिविसङ्क । मिया-

दार२३दाइ। उग्रा२३ऽहाइ। शामा२३हाइ। महः ३ होये-
३। श्रा२ वा २ ३ ४ औहोवा। म्वा २ ३ ४ भौ॥ ६॥

(इन्द्राण्याः साम॥) उच्चातेजातमा। धासा२३ः।
श्रामो३वा। दिविसद्भू। मियादा१दे२३। श्रामो३वा।
उग्रा३ऽ शा१मा२३। श्रामो३वा। महायै३। श्रा२वा२
३४औहोवा। ऊ३२३४पा॥ ७॥

(ग्रैष्मर्व॰ह॥) उच्चातेजातमन्धासाः। दिविसद्भूम्याइ-
दाइ। उग्रऽशार३४र्मा। महा३इश्रापुवाई५ई:॥ ८॥
उच्चातेजातमन्धा२साः। दिविसद्भू। म्यादा२३दाइ।
उ। ग्रऽशार३र्मा। महा२। हा२इ। औ३हो३१इ।
श्रवा२ः। हा२इ। औ२हो३१इ। इया२होइ। इयो२३
४पुवाई५इ। ऊ२३४पु॥ ८॥

(दोहसाम॥) उच्चा३४औहोवा। तेजा२। तमा३४पु।

भा२३४साः। दिविसद्भूम्याददे। उग्रꣳशा२र्मा। मंहि

श्रवो। औ३होवा। हो५इ। डा॥ १०॥

(दोहीयसाम॥) उच्चातेजातमन्धसोदोहाइदोहा१ए।

दिविसद्भूम्याददे। दो३हाइ। दो२हा३ए। उग्रꣳशार३

र्मा। दो३हाइ। दो३हा३ए। मंहिश्रा२३वा३४३ः। और

३४५इ। डा॥ ११॥

(इन्द्राण्याः साम॥) उच्चातेजातमन्धसाः। दिवाइ

सा२३४द्भू। मिया२ददे। ओम्। ओ२वा। ओ३वा।

ववा२३होइ। उग्रꣳशा२३र्मा। ओ३वा। ओ३वा।

ववा२३होइ। मंहिश्रवोर। या२३४औहोवा। ययु

र२३४५॥ १२॥

(आमहीयवम्॥) उच्चाता२इजातमन्धसाः। दिवा

२ १ २ ३ २ १ २ १
इमा·र इ्भू१। मिया २ इ्दा इ्। उग्रं शर्मा। मद्दा-
२र १११
२ ३ इ्। अवाउ। वा३। स्तौषि३४५॥ १३॥ १

अमहीयुर्ऋषिः* । हे "सोम!"† "ते" तव सम्बन्धिनः "अन्धसः" रसस्य ‡ "उच्चा" उपरि¶ "जातम्" जन्म।

---

* "आङ्गिरसः" इति ऋषि-नैगेयः।

† "सोमः" निघण्टौ दैवतकाण्डे ऽन्तरिक्ष—विभागीयस्तुति-प्रधानो देवः, वायु-साहचर्याच्च भज्यते, यथा च राजधानीस्तवनेन भवति राज्ञः स्तुतिः, भवति च मेघस्तवनेन वर्षस्य स्तुति; तथैवास्य स्तवनेन वायोरेव स्तुतिः। तथाहि—

"यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनः।
वायुः सोमस्य रक्षिता समानां मास आकृतिः॥"
(ऋ० १०, ७, १, ५)

"यत् त्वा देव! प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा। वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा। समानां संवत्सराणां मास आकृतिः"-इत्यादि यास्कक्षितं तद्व्याख्यानम्। अतएव "तिस्र एव देवताः (नि० ७, १, ५)"-इत्यादयुक्तिरदोषा। स च ओषधि-विशेषः, तथाहि "ओषधिः सोमः (सुनोतेर्यदेनमभिषुण्वन्ति) बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन"-इत्यादि नि० ११, २ ३-४-५। स च दुग्धाभ-रस-विशिष्ट-वल्लीभ्यः चरित-पदार्थः सुतरां दुग्धाभरसरूपः, तथाच श्रूयते—"सोमो दुग्धाभिरक्षाः" (ऋ०३,२,५, ५ द्वितीयः पादः) "सोमो दुग्धाभ्यः क्षरति"-इति च तद्भाष्यम् (५, ३)।

‡ "अन्धइत्यन्ननामाध्यानीयं भवति। * * *। तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तमइत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव।"-इत्यादि नि० ५, १।

¶ उच्चा इति उच्चैरर्थे उच्चा इति, तस्यैव "निपातस्य" (६, ३, १३६)-इति दीर्घ रूपमच्चा-इति।

अथ द्वितीया ।

२　२　३　१　२　३　१२
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
१　२　३१　२　३　२
इन्द्राय पातवे सुतः ॥ २ ॥ २

१२　२　१　२　१　२　र
(आजिगम ॥) स्वादाइष्ठायां । मदाइष्ठाया । पवस्वसो ।
२　२　२　१　१　२　१
माधा१रा२३या । इन्द्रायापा १ तवाइसू२३ता३४३ः । ओ
२३४५इ । डा ॥ १४ ॥

अपिच । "दिवि" द्युलोके "सत्" दीप्यमानम् "उग्रम्" उद्गूर्णम्† "शर्म" सुखं‡ "महि" महत्¶ "श्रवः" अन्नञ्च§ "भूम्याददे" [इत्यत्र यमाम्नन्ति । विसर्जनीयलोपः साङ्गितिकः] भूमिः भौमजन्य. अस्मात्तूग्र:; भूमिष्ठैराद्दीयत इत्यर्थः ॥ १ ॥ १

---

उ०१,१,१५,१ = ऋ०७,७,१६,१=स्वार १,२,३ ;—३,६,७=ऊ०१,१,८ ; —८,२, १० ;—१०,२,१० ;—११,२,७; —१२,२,४ ; —१३,१,९ ; —१८,१,१५—१६ ;—१९,२, १८ ,—२०,२,१० ;—२१,१,२०=ऊह्य ३,१,२ ;— ४,१,१२ ;—४,२,१८।

† 'उग्रम् बलवत्'-इति वि० ।

‡ 'शर्म शरणम्'-इति वि० । शर्मेति गृह-नामसु चैकविंशतितमं पदम् नै० ३, ४ ।

¶ महत्, महः, महि:-इति पाठभेदेन पठ्यते नै० ३, ४, ११

§ "श्रवः"-इति अन्ननामसु चतुर्थं पदम् ( नि० २, ७ ) ।

( सुरूपम् ॥ ) स्वादिष्ठया२ इया२इया। मदिष्ठाया२। पवस्वसो२। इया२इया। मधारायाा२। इन्द्रायापा२। इया२इया। तवाइसू२३ता३४३:। ओ२३४५इ। डा॥ १५॥

( सुरूपोत्तरम् ॥ ) स्वादिष्ठयौहो२। इया। मदिष्ठायौ२। पवस्वसौहो२। इया। मधारायाा२। इन्द्रायपौहो२। इया। तवाइस्व२३ता३४३:। ओ२३४५इ। डा॥ १६॥

( जमदग्नेः शिरवि दे॥ ) ओइस्वा२३४दी। ष्ठया३मादिष्ठया। ओ२३४वा। पवस्वसोमधारया३। ओइ२३४न्द्रा। या२पा२३४औहोवा। तवे सुता५१:॥ १७॥

उऊवाइ। स्वा२३४दी। ष्ठया३मादिष्ठया। ओ२३४वा। पवस्वसोमधारया३। उऊवाइ। इन्द्रापूयपा। तारवा२३४औहोवा। सू२३४ता:॥ १८॥

(सम्हितम् ॥) स्वादाइष्ठया । मदिष्ठयां३ । पवा३स्वासो । मधारया३ । आइन्द्रा३यापाई । हाउ । तवा५इसुताउ । वा ॥ १९ ॥

(संकुलः ॥) स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ । अ५यपा । तवा२इ । ए२ । तवा२इ । ऊ२ । तवा३४औहोवा । सू२३४ताः ॥ २० ॥

(गम्भीरम् ॥) औहोहम् हाणहिया । हा३हाइ । स्वादाइष्ठाया । मा२३४दो । उइमा२३३दी । औहोहम् हाणहिया । हा३हाइ । ष्ठयापाव । स्वा२३४सो । ओ स्वा२३४सो । औहोहम् हाणहिया । हा३हाइ । मधारया । ई२३४न्द्रा । ओई२३४न्द्रा । औहोहम् हाणहिया । हा३हाइ । यपातवाइ । सू२३४ताः । ओइसू२३४ताः । औहोहम् हाणहिया । हा३हा३४ । औहोवा । ई२३४५ ॥ २१ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ ३ १
वृषापवस्वधारयामरुत्वतेचमत्सरः।
३ १ २ ३ १ २
विश्वादधानओजसा ॥ ३ ॥ ३ *

४र ५ र ४ ४ २
(सऽहितम् ॥) स्वादिष्टयाम। दा५इष्ठया। पवा२।
१ ४ १ १ २ १
स्वा२३सो। मधा२राया। आ२३इन्द्रा। या२पा।
७ २ ५
तवा२३। हाउवा३। सू२३४ताः ॥ २२ ॥ २

५र २ १ १ २
(सोमसाम ॥) वृषापव३। स्वधाराया२। मरुत्वताइ।
२ १ २ ३ ४र र २
चमत्सा२३राः। वाइश्वा२३। दा२धा२३४औहोवा। न-
१र २ १ १ १ १
ओजसा२३४५ ॥ २३ ॥

मधुच्छन्दा ऋषिः†। हे "सोम!" "इन्द्राय" "पातवे"‡ पातुं "सुतः" अभिषुतस्त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया"¶ अतिशयेन मादयित्र्या "धारया§" "पवस्व" क्षर ॥ २ ॥ २

---

* ऊ० १,१,१०,१ = ऋ० ७,१,१,५ = ज० १,१,१९;—४,१,१—६—३;—४,२,१—७,१,१—२;—११,२,२४—१५;—१८,१,१८—१९;—२०,१,१;—२२,२,९—१०।

† "वैश्वामित्रः"-इति ऋषि-भेदेयः। ‡ तुमर्थे तवेन् प्रत्ययः (३,४,९)।

¶ "तुश्छन्दसि (५, ३, ५९)"-इतीष्ठन्। § प्रवर्षकत्वात्।

४ ५ १ ५ १ २ ५
(सोमसाम ॥) वृषाद्दाउ । पा२३४वा । स्वधारा२३४या ।
३ ५ २ ५ २ २ ५ १ १र
मा२३४ह्व । त्वा२३४ताइ । चामंत्मा२३४राः । वाइस्वाद्
१ १ ३ ५र १ ३ ५
धार२३ । ना२ओ२३४औहोवा । ओ२३४सा ॥ २४ ॥

४ ५र ४ ५ र ५ १ २
(आष्टभार्गवम् ॥) वृषापव । स्वधारा६या । मारुत्वता
१ ३ ५ १ २ २१
३इ । चामो२त्सा२३४राः । विस्वादा१धा२ । नओ३ ।
१ ५ ५
जा२३४सो६हाइ ॥ २५ ॥

४ ५ ४ २१ २१ ५ २
(वैश्वदेवम् ॥) आइवृषा । गवा । इदा । चौ३हो ।
१र ५ २ १ २ २ १
स्वधारा२३४या । मं । ह्व । त्वते२हाइ । च । भा
२ ५ र र र र २र
त्सरा२३हा३४इ । विस्वादधाहाउ । नओजसाहाउ ।
२ २ १२ २ २र १ ११
वा३ ४ ३ ओ ३ ४ ५ वा ६ ५ ६ । अस्मेरायाऽउतश्रवा २ ३
१ १
४ पुः ॥ २६ ॥

५ र २ २ ४ ५ २ १ ३ २
(वैश्वदेवम् ॥) वृषा । पवा३ । एहिया । स्वधार । रया३४
३र ४र ५ १ २ ३र ४र ५ १ २ २ २ २
औहोवा । मारुह्व३४ । औहोवा । त्वतेचमा१त्सा३राः ।

औ३हो३१येइ। औहो२३४५वाई५६। विश्वाद्धान ओजसा२३४५॥२७॥

(इन्द्रसाम॥) वृषापावा२३। हौहाइ। औ३हो२३४५। स्वधारया२३। हौहाइ। औ३हो२३४५। मरुत्वाते२३। हौहाइ। औ३हो२३४५। चमत्सारा२३ः। हौहाइ। औ३हो२३४५। विश्वादाधा२३। हौहाइ। औ३हो२३४५। नओजासा२३। हौहाइ। औ३हो २३४३। औ२३४५इ। डा॥२८॥

(इन्द्रसाम॥) वृषापावा। औहौहो२३४वा। स्वाराया। औहौहो२३४वा। मरुत्वाता। औहौहो२३४वा। चमात्सारा। औहौहो२३४वा। विश्वादाधा। औहौहो २३४वा। नओजासा। औहौहो२३४वा। ह्वा५इ। डा॥२९॥

(यौक्ताश्वम॥) औहौहोवाइ। वृषा। पवस्वा२धा-

रायाः३ । माहु२त्वा२३४ताइ । आइ । चमा२३ । चमा२
त्मा२३४रोः । औहोहोहाइ । विश्वा । दधा२ना२३४ओ ।
जासा२३४औहोवा । ओइ । ज्म२र्म ॥ ३० ॥

(यौक्तोत्तरम् ॥) वृषाओहोहोहाइ । पषा२स्वाधा
१रायाः३ । माहु२त्वा२३४ताइ । चमा३इ । ओइ ।
चमा२त्मा२३४राः । विश्वाओहोहोहाइ । दधा२ना-
२३४ओ । जा२सा२३४औहोवा । ओइ । ज २ ३ ४-
वा ॥ ३१ ॥ ३

॥ इति ग्रामे गेये द्वादशः प्रपाठकः ॥

भृगुर्वारुणिरृषिः* । हे "सोम !" त्वं "वृष्ण" स्तोतृणा-मभिमतवर्षकः† सन् "धारया" त्वदीयया "पवस्व" द्रोण-कलशं‡ मागच्छ । [पवतिर्गतिकर्मा¶] । आगतस्त्वं यदास्माभि-

---

* अथवा जमदग्निर्भारद्वाजः (अनु०) ।

† वृषभिति नाम्नस्त रूपमिदम् । अन्यत्रापि १९९, ३०१, ३१९, ५०१, ५४५, ७६०, ८३४ पृष्ठेषु च व्याख्यानम् ।

‡ सोमस्याधारपात्रविशेषम् । अत्रैव चोत्तरत्र ६,१,२,७ — ४,१० — ५,३ अनुविदितम् ।

¶ निघण्टौ गतिकर्मसु "पवते"-इत्यस्याचोत्तरत्वेन दर्शनात् (२,१४) ।

अथ चतुर्थी ।

२ ३ २ ३१२ ३ १ २ ३ १ २
यस्ते मदो वरेण्यस्तेनापवस्वान्धसा ।
३ १ २ ३ २
देवावीरघशंसहा ॥ ४ ॥ ४ *

४ ५ १ २ ३ ५
ओम् ॥ (भासम् ॥) यास्ताइ । मादो । वाराओ२३४वा ।
३ ५ ४ ५ १ २ ३ ५ ३
णो२३४याः । ताइना । पादा१ स्वा३ओ२३४वा । धा-
रिन्द्राय दीयते तदा। "मरुत्वते" सहाया मरुतो यस्य सन्ति† तस्मै इन्द्राय "मत्सरः"‡ मदकरश्च भव । कीदृशः ? "विश्वा"¶ विश्वानि सर्वाणि आमानि वा धनानि "ओजसा" आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ ३ ॥ ३

---

* ऊ०२,१,१४; (= ऋ०७,१,२१,४ = कृ०२,१,५;—४,१,१०;—६,२,७ ;— ९,३,८; —११,२,२—१०—२०;—१२,२,९;—१३,२,१७;—१४,१,११—१२—२३; २०,१,२—२-४ = उ० १,१,१;—३,१,४—१४—१० ।

† अस्ति मरुत ऋत्विङ्नामसु (३,१८)—रूपनामसु (३,१७)—हिरण्यनामसु च (१,२) निघण्टौ । तत्रैव दैवतकाण्डेऽन्तरिक्षदेवतासु च "मरुतः"-इति दृश्यते । अत्र च तेषामेव देवगणानां ग्रहणम्; तत्र च श्रूयते—"अस्ति सोमो"-इत्यादि (प्र०१९२पृ०) मरुतामिन्द्रसहायभूतत्वञ्च "इमस्य त्वा"-इत्यादौ (प्र०६५६पृ०) श्रूयतएव ।

‡ मदिधातोरौणादिके सरप्रत्यये रूपम् । एवं चौत्तरर्चान्वितापि चतुर्थ (६,१, १,२—२,८—११—४,१०) श्रोत्यस्मै मत्सर इति ।

¶ सुप आत्वे रूपम् (७,१,३९) ।

२३४सा । दाइवा । वाइरा । घाशाश्रा२३४वा । सा२-
३४हा ॥ १ ॥

(सोमसाम ॥) यस्तेमदाः । वराइणियाः । ताइनापावा-
३स्वा३ । अन्धसा । दाइवावाइरा३४ । हाउ । घशा
५ऽसहा । हो५इ । डा ॥ २ ॥

(प्राजापत्यम् ॥) यस्ता३२इमा२३४दाः । वराइणाया ।
आ२३४वा । हा । ओ२३४वा । हाइ । ताइनापव ।
स्वान्धासा । ओ२३४वा । हा । ओ२३४वा । हाइ ।
दाइवावाइरा । ओ२३४वा । हा । ओ२३४वा । हा३इ ।
घा२शा२३४ओहोवा । सहो२यौ३हा२३४५ः ॥ ३ ॥

(सोमसाम ॥) यस्ताइमा२३ दोवरेणियाः । ताइनापव ।
स्वान्धा२सा२ । दाइवा२वाइरा२३ । घशा२३४वा । सा५-
होइहाइ ॥ ४ ॥

अथ पञ्चमी।

३ १र ३ १ २ ३ १ २ ३ १ २
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः ।

५ र १ ४ ५ ४ ५ १ २
(भासषृ सामोग्नेर्यस्ते। माइदा। वा। इया। राइणा

१ र २ ५ ९ २र २र २ १
याऽरः। ताइनापव। स्वा। औ३हो। वाहा। धसा२।

१ १ ३ ५ र २ ३ १
दाइवा२३। वा२इरा२३४ ओहोवा। धसृ हा१॥५॥

५ र र र ५ २र २र
(अङ्गनर्बङ् सामसाम॥) यस्तेमदोवरेणियाइए। तेना-

र २र र र २ १ २ १
पवस्वान्धसा। देवाव्वीरा२३। हाइ। घाशाउवा। सा-

२ २ ५ र
हाउवा३। ऊ३२३४पा॥६॥ ४

अमहीयुर्ऋषिः*। हे "सोम!" "ते" तव "देवावोः"+ देवकामः "अघशंसहा" राक्षसानां हन्ता‡ "वरेण्यः" सर्वैर्वरणीयः "मदः" मदकरः "यः" रसोविद्यते तेन रसेन "अन्धसा" आदरणीयेन¶ "पवस्व" चर॥४॥४

---

* "आङ्गिरसः"-इति ऋषि-निर्णयः।

+ देवावीरिति 'वीकान्तौ (अदा०उ०)'-इत्यस्य रूपम्, कान्तिरिच्छा। देवान् वेति इच्छति स देवावीः, अन्येषामपीति (६. ३, १३७) पूर्वपददीर्घः।

‡ "अघशंसः"-इति स्तेननामसु पठितं नैघण्टुकम् (३, २४)। 'अघं पापं, यः शंसति, तस्य हन्ता'—इति वि०।

¶ आदरणीयेनान्नेनेति भावः। "अन्धसा अन्नेन"-इत्यर्थे वि०।

१ २ ३ १ २
हरिरितिकनिक्रदत् ॥ ५ ॥ ५

५ र र १
(वैष्टम्भे द्वे ॥) तिस्रोवाचाः। उदाइ। उदा३१उ।
२ ५ र र २ २ २
वायेइ। रा२३४ते। गावोमिमा। तिधाइ। तिधा३१उ।
२ ५ र ३ २ १ २
वायेइ। ना२३४वाः। हरिरितो। कनाइ। क्ना३१उ।
२ ५
वायेइ। का२३४द्रांत् ॥ ७ ॥

५ र र १ २ २ १र र १
तिस्रोवाचाः। उ३हाइरा३ते। गावोमिमाक्तिधा३इ-
२ २ र ३ ५ २ ५र र
ना३वाः। हरिरितो२३४हाइ। का३ना२३४ओहोवा।
५
क्रा२३४द्रांत ॥ ८ ॥

२ र १ २ र १ २र
(पाष्ठौहे द्वे ॥) तिस्रोवाचो२३४हाइ। उदीरताइ। गा-
र १ २ र १ २ ५ २
वोमिमा२३४हा तिधेनवाः। हरिराइतो२३४हाइ। क-
१ २ ३ ५र र २ १ २ र १ २ १ १
नायेइ। क्रा२दा२३४ओहोवा। अस्मभ्यङ्क्षातुवित्तमा२-
१ १ १
३४५म् ॥ ९ ॥

* उ० २, २, १४, १ = ऋ० ९, ९८, २१, ४ = छ० २, १, २० ;—७, १, १९ ;— ९, १, ७ ;—
१५, १, १९ ;—२०, १, १०—११ ;—जैमि १, २, १२।

तिस्रोवाचउदीरता। वाहाइ। गावोमिमा३। तीधेना२३४वाः। हारीराइती। का२ना२३४ओहोवा। का२३४दान्॥ १० ॥

(वृत्तकवैष्टम्भम्॥) तिस्रोऽ५वा। चा३उदीरताइ। गावोमिम। तिधाइना१वा२३। होवा३हाइ। हराइरा१-इती२३। होवा३हाइ। कनायेइ। का२दा२३४औहोवा। दी२३४आः॥ ११ ॥

(पार्ष्णौष्म॥) तिस्रोवा वा५उदीरताइ। गावोमिम-न्तिधेनवः। हरिरा२३इती। कनौ२। ऊवाइ। हो३वा३। का२दी२३४ओ होवा। हाओवा। ओव२३४५॥ १२ ॥ १

त्रितऋषिः*। "तिस्रोवाच" ऋगादिभेदेन त्रिविधाः†

*—"आप्त्यः"—इति ऋषि-निर्णयः।

†—"चत्वारिवाक्परिमिता"-इत्यादौ (ऋ० १, २१, ८, ४५) श्रुतौ तु व्याव-हारिक्या वाचा वाचां चतुष्ट्वम्। तथाच तत्रैव यास्ककृतं व्याख्यानम्—"ओङ्कारो-महाव्याहृतयश्चेत्यार्षम; नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः; मन्त्रः कल्पो ब्राह्मणं,चतुर्थी व्यावहारिकीति याज्ञिकाः; ऋचो यजूंषि सामानि,चतुर्थी व्यावहारि

अथ षष्ठी ।

१ २　　१ १ २ ३१ २ ३ १ २
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः ।
३ २ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम् ॥ ६ ॥ ६*

५ र १　　२ १ २ १
(इषोवृधीयम् ॥) इन्द्रायेन्दाउ । मरुत्वताइ पवस्वा-

"उदीरते" स्तोतः प्रोद्गायन्ति ऋत्विजः । "धेनवः" आशिरेण प्रोणयित्र्यः "गावः" "मिमन्ति"† शब्दायन्ति दोहार्थम् । "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्"‡ शब्दं कुर्वन्ति गच्छति कलशम्¶ ॥ ५ ॥ ५.

---

* उ०५,१,११,१= ऋ०७,१,४०,१=ऋ०३,१,१६—१८—१८—१९—२०—२१; —८,१,४ ;—१०,२,४ ;—१६,१,१३ ;—२२,२,१६ जह्र० १,१,१० ।

कौनि [illegible], सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य, चतुर्थी व्यावहारिकीत्येके । पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादः । अथापि ब्राह्मणं भवति—सा वै वाक् सृष्टा च तुर्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम् ; या पृथिव्यां साग्नौ सा रथन्तरे, यान्तरिक्षे सा वायौ सा वामदेव्ये, या दिवि सादित्ये सा बृहति सा स्तनयित्नौ ; अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति— या च देवानां, या च मनुष्याणाम्"-इति नि० पू०१, ९ ।

†—'मा शब्दे ( जु० आ० )'-इत्यस्य पुरुषव्यत्ययेन ( ३, १. ८५ ) रूपम् ।

‡—क्रिरन्तोऽशब्दकरणेऽर्थे विद्यमानस्य चुरादेश्चणयपदिमैः क्रन्दे : सार्वकालिके ३, ४, ६ ) लुङि "दाधर्ति ( ७, ४, ६५ )"-इत्यादिनाऽचलेरक् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपातितः ।

¶—द्रोणमिति प्रसिद्धम् ।

मा२। धुमत्तमाः। अर्कस्ययो२। निमा२३। सा२-
दा२३४ औहोवा। ईषीवृधे१॥ १३॥

(इन्द्रसाम॥) आ२३४इन्द्रा। या२३४इन्द्रा। मरु-
त्वते३। पा२३४वा। स्वा२३४मा। धमात्तमा३ः। आ-
२३४र्का। स्या२३४यो। निमासदा२३४५म॥ १४॥

(वैश्वदेवे द्वे॥) इन्द्रायाइन्दो२३। हा। औ३होवा।
मरुत्वाते२३। हा औ३होवा। पवस्वामा२३। हा।
औ३होवा। धुमत्तामा२३ः। हा। औ३ होवा। अर्क-
स्यये२३। हा। औ३होवा। निमासादा२३म्। हा।
औ३होवा३४३। ओ२३४५इ। डा॥ १५॥

इन्द्रायेन्दो। ए५। मरु। त्वताइ। पवस्वमधु-
मत्ता२३माः। ऊवाइ। हो३वा। अर्कास्या२३यो। ऊ
वाइ। हो३वा। निमासा२३दा३४३म्। ओ२३४५इ। डा।
॥ १६॥

(आग्नेये द्वे ॥) इन्द्रायेन्दोहाउ। म। रु। त्वते३हाउ। पवस्वमधु। मा। तमार२३हाउ। अर्का। स्ययो२३हा३इ। निमा२३। हो२३४वा। सा५दो६हाइ॥ १७॥

इन्द्रायेन्दो वा। ओवा। मरुत्वतोवा। ओवा। पवस्वमोवा। आवा। धमत्तमोवा। ओवा३। अर्काहाउ। स्ययोहाउ। निमोवा३ओ२३४वा। सा५दो६हाइ॥ १८॥

(वैश्वदेवम् ॥) इन्द्रायेन्दोमरुत्वाते। ओहाइ पवस्वमधमत्तमः। ओ३हा३४३। ओ३४हा। आर्कस्यायोर२। नोर२इमा२३४ओहोवा। उप्। स्म२३४दाम् ॥ १९ ॥

(आग्नेयम् ॥) इन्द्रायेन्दोमरुत्वा६ताइ। पवस्वम। धुमात्ता१मार२३४:। अर्कस्ययोनिमा६हाउ। सा५दो६हाइ ॥ २० ॥ ६

काश्यप ऋषिः*। ६ "इन्द्रे" सोम।† "मधमत्तमः"

---

* "मारीचः" इति ऋषि-नैमेयः।

† ऋ० ९।६४ प० ३ल।

अथ सप्तमी।

१ २ ३ १र २र ३ १र २र ३ २
असाव्यꣳशुर्मदायाप्सु दक्षोगिरिष्ठाः।
३ २उ ३ १ २
श्येनोनयोनिमासदत्॥ ७॥ ७*

४ ५ १ २
(शेषगानि चत्वारि॥) आसा। वियꣳशुर्मा२१उवा२३।
५ ४ ५ ४ ५ २ २ १ ११११
दा२३४या। आप्सुदाक्षाः। गिरा३१उवाये३। ष्ठा२३४५ः।
२र १र २ ५
श्येनोना२३यो। निमा३१उवा२३। सा२३४दात्॥ २१॥
४ ५र ४ १ ७ १ ७ १
असावियाः। शुर्मदा२। य। आप्सुदाक्षा२ः। गा-
२र ११ २ १ २ ५ ४
इरिष्ठाः। श्याइमो१नायो२३। निमो२३४वा। सा५दो-
५
इदाइ॥ २२॥

अतिशयेन मधमान् "अर्कस्य" अर्चनीयस्य† यज्ञस्य "योनिं" स्थानं "आसदम्"‡ उपवेष्टुं "मंकल्पते" "इन्द्राय" इन्द्रार्थं "पवस्व" चर॥ ६॥ ६

* उ० ३,२,१६,१ = ऋ० ७,१,२४,४, = आर १,१,२२ = ज ३,१,१ ;—७,२,१९ ;—१६,१,४ ;—१०,२,१।

† प्र० ८८८ पृ० ६०। अर्कइति अर्चते रूपम्।

‡ 'आसदम् आसीद' इति वि०।

असा। वियाओ२३४वा। अमंदायां। ओ२३४वा। आ-
प्साओ२३४वा। दक्षोगिराइ। ष्ठाओ२३४वा। श्येनोनयो-
निमासदा२३४५त्॥ २३॥

असा। वियौवाओ२३४वा। भ्रुमंदायौ। वाओ२३४वा।
अप्सु। दक्षौवाओ२३४वा। गिराइ। ष्ठौवाउ२३४वा।
श्ये नः। श्यौवाओ२३४वा। निमा। सादौवाओ२३४वा।
होपुइ। डा॥ २४॥

(च्यावनानि चत्वारि॥) असा। व्युक्षवाचाइ। अ-
भ्रुर्मदायाप्सुदक्षोगिरिष्टाउक्षवा२३चाइ।ः श्या२३इनो३।
ना२योर२३४औचोवा। निमासदा२३४५त्॥ २५॥

असाव्यंशुः। औचोवाशाइ। मदा२३या। आ-
प्सुदक्षोगिरिष्ठाः। श्याइनोना३यौ३। ना२इमा२३४औचो-
वा। उप्। सा२३४दात्॥ २६॥

अथाष्टमी।

२ २ १२ ३१२ ३१२
पवस्वदक्षसाधनोदेवेभ्यःपीतयेहरे।

३१ २ ५२ ४ ५२
इहा३१२३४। इहा। साव्य॰शुर्मदाय। इहा।
२१ २ २ ३ ५ १२ १२ ३१
अप्स्वदक्षोगिरिष्ठा३४५ः। ई२३४हा। श्येनोनयोरनिमा-
२ ५ १ ३२ ३ ५
३४५। ई२३४हा। आ२सदा३४५त्। ई२३४हा॥२७॥

३ ५ २ ५ ५
असा२३४। विय॰शुः। मदा२३४याई। अप्सु।
२ ३ ४ २१ ५ २ २
आप्स्वदा२३४क्षाः। गिरा३ष्ठा२३४हाइ। श्याइनोना३-
२ १ २ १ ५ ५
यो३। नाइमा२३हा३४३इ। सा२३४दो६हाइ॥२८॥७

जमदग्निर्ऋषिः*। "गिरिष्ठाः" पर्वते जातः "अंशुः" सोमः "मदाय" मदार्थं "असावि" अभिषुतः। "अप्सु" सतीवरीषु "दक्षः"† प्रवृद्धश्च भवति। किञ्च। "श्येनोन" यथा श्येनो वनादागत्य स्थानमासीदति तद्वद् "अयं" सोमः "योनिं" स्वकीयस्थानम्‡ "आ सदत्"¶ आसीदति॥७॥७

* "भार्गवः"-इति ऋषि-नैगेयः।

† दक्षइति बलनामसु नैघण्टुकम् २, ९। 'दक्षः क्षीप्रः'-इति वि०।

‡ द्रोणकलशमिति यावत्।

¶ लेटो रूपम् (३, ४, ७)

२ १ २ ३ २ ३ १ २
मरुद्भीवायवेमदः ॥ ८ ॥ ८ *

४ ५ र ४र ५
(प्राजापत्ये द्वे ॥) पवस्वदौ। हौहोवाहाइ। सा-
२र ५ २ १ र ५र
धनाः। औ३हो३४इ। औ३हो३४इ। औहो।
३र २ र १र २ १ १ ३र २ ५ २ १
वाहाइ। देवेभ्यःपाइ। तयेहरा३इ। औ३हो३४इ।
र ५र ३र २ १ २र ५ २ २ र ५र
औहो। वाहाइ। मरुद्भीवा३। औ३हो३४इ। औहो।
३र १ र ५र र ३ ५
वाहा३इ। वा२वा२३४औहोवा। मा२३४दाः ॥ २९ ॥

४ ५ ४र ५ ५ २र १र र १
पवस्वदक्षसाधनः। ओ६वा। देवेभ्यःपीतया२ओइ।
२ १ २र १ ४ ५
हरा२इ। मरुद्भीवा२। ओ२३। यवोवा। मा५दोई
५
हाइ ॥ ३० ॥ ८

इदञ्चात आगस्त्य ऋक्षिः । हे "हरे" हरितवर्ण पाप-हर्त्ता वा सोम! "दक्षसाधनः" दक्षो बलन्तस्य साधकः† "मदः" मदकरस्त्वं‡ त्वं "पवस्व" क्षर। किमर्थम् देवेभ्यः इन्द्रादिभ्यः

---

* उ०१,१,१०,३ = क्र० ६,८,१५,१ = उ० १,२,८ ;—१५,२,९ ;—१६,२,१ = ज्ञा० १,१,७।

† 'दक्षसाधनः शीघ्रसाधनः' इति वि०।

‡ 'मदः मदनीयः'-इति वि०।

अथ नवमी ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानो गिरिष्ठाः पवित्रे सोमो अक्षरन्* ।

१ २ ३ २
मदेषु सर्वधा असि ॥ ९ ॥ ९†

(आद्यं वैदन्वतम् ॥) पारो। स्वाणोगिरिष्ठाः। प-
वा२इत्रे२३४सो। मोअक्षारा२न्। मदाइषूसा३। ई३-
या३। वधा२३४वा। आपूर्[illegible]ई॥ ३१ ॥

(द्वितीयं वैदन्वतम् ॥) प। येंपारी। स्वानोगिरिष्ठाः।
पवा२इत्रे२३४सो। मोअक्षारा२न्। मदाइषूसा३र्वा३।
वा२धा२३४औहोवा। ए३। असी२३४५॥ ३२ ॥

"पीतये"‡ पानाय। तथा "मरुद्भ्यः" वायवे च पीतये पानाय "पवस्व" क्षर ॥ ८ ॥ ८

---

* "सोमो अक्षाः"-इति उत्तर-व्याख्याने वि० ।

† उ०४,१,१७,१=ऋ०४,८,८१=ज०३,२,८—९—१०;—८,१,९;—९,१,९;—१०,१,१८;—१२,१,४;—१४,१,३;—१५,१,८—९—१०—११—१२;—१५,२,७=काश्चो २,१,२०;—२,२,१२;—४,१,१४;—६,१,१२।

‡ "मन्नो वृषेषपच (३, ३,९६)"-इति शिक्ष दातव।

( तृतीयं वैदन्वतम् ॥ ) पाऽ५पुरी। स्वानो३गो३इरिष्ठाः।
पवित्रे सों। मा अक्षरात्। पवित्रे। सोमो२३। क्षा-
रत्। ओइ। मदौ। वा३४३ओ२३४वा। धुवा। सर्वधाः।
असायि३। मा२दार२३४औहोवा। ए३। धुसर्वधा असी-
२३४५ ॥ २३ ॥

( चतुर्थं वैदन्वतम् ॥ ) औ३होइ। इहाहाहाइ।
औ२हो२३४वा। पराइस्वार२३४नो। गिरा२३४इष्ठाः।
पाविन्ने२३४सो। मोअक्षार२३४रात्। मदाइषू२३४सा।
वधाआर२३४सी। औ३होइ। इहाहाहाइ। औरहो-
२३४५वा६५६। ए३। उपा२३४५ ॥ २४ ॥

( आङ्गिरसस्य पदस्तोभौ द्वौ ॥ ) पा। येस्वानाः।
गा२इ। रिष्ठा२या। हाहाइ। ओवा२३होइ।
पाविन्ने सो। मोअक्षारा२त्। हाहाइ। ओवा२३होइ।

३ २ ३र २ १ १ २ १ ५
मदा२इषुसा। हाहाइ। ओवा२३हो। वधो२३४वा।
४ ५
आ५सोइहाइ ॥ २५ ॥

५ र र र र ४ ५ १ ३
पयौहोवाहाइस्वाना:। गा२इ। रिष्ठा२या। ओ२३४।
३र २ ३र २ १ २ १ २ १ २ १ ७
होहोइ। हाहा। होवा। होवा। पवित्रेसो। माञ्च
३ ३र २ ३र २ १ २ १
तारा२त्। ओ२३४। हाहोइ। हाहा। होवा। मदा
३ २ ३ ३र २ ३र २ १ २ १
२इषुसा। ओ२३४। हाऊाइ। हाहा। होवा। हो
१ २ १ ५ ४ ५
वा३। वधो२३४वा। आ५सो६हाइ ॥ ३६ ॥ ९

अस्याः परस्याश्च काश्यपोऽसित* ऋषिः। अयं "सोमः" "पवित्रे"† "पर्य्यक्षरत्" परिक्षरति। "स्वानः" सुवानः‡ अभिषूयमाणः "गिरिष्ठाः" गिरिस्थायी गिरौ वर्त्तमान इत्यर्थः। स त्वं "मदेषु" मादकेषु स्तोतृकेषु "सर्वधा असि" सर्वस्य धाता दाता वा भवसि॥

"स्वानः"-"सुवानः"-इति, "अक्षरत्"-"अक्षा"-इति च साम्नृचः पाठः ॥ ८ ॥ ९

---

* अथवा कश्यपो देवलः (ऋ०अनु०)।

† 'पवित्रे ऊर्णमये'-इति वि०। पवित्रञ्च दशापवित्रमित्यनुपदम् (इतश्चतुर्थे) वक्ष्यति सायणः।

‡ सार्वमिकबहुलवचनात् उवङ् विकल्पः (७, ३, ९७)।

अथ दशमी।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ १ २
परिप्रियादिवःकविर्वयाꣳसिनप्त्योर्हितः।

३ १ २ ३ १ २
स्वानैर्याति*कविक्रतुः॥ १०॥ १ः†

॥ चतुर्थ-दशति॥

५ र ४ ५ १ र
(पूर्व्वमौर्णायवम्॥) परिप्रियादिवःकावीः। वयाꣳ

र २र २ १ १ ऽ
सिनप्त्योर्हितः। स्वानैर्या२३तौ। आया२। इया२ई-

२ २ २१ ३ ५र र ३ १११११
३या। कविक्रतोर। आर२३४औहोवा। ई२३४५॥ ३७॥

४ ४ १ ऽर
(उत्तरमौर्णायवम्॥) परिप्रिया५दिवःकवाइः। वया

र २ १ र र २ १ र र २ १
२हो१वाꣳसिनप्त्रे वोर्हितः। स्वानैर्या२३ती। ऊवा।

२ १ २ १ ऽ २ ३ २ २
होवा। होवा। ऊवा२ब्रू। ई३या। कविक्रतोर।

३ ५र र २ १ ११११
यार२३४औहोवा। ई३या२३४५म्॥ ३८॥ १०

॥ इति प्रथमस्यार्द्धः प्रपाठकः॥

---

* "सुवामोपोर्याति" इति उ०-व्याख्याने वि०।

† ऊ० ३,१,१८,१ = ऋ० ६,७,२२,१ = ज० २,२,१५,—७,१,८;—१५,२,१०;—१६.९,११;—२०,१,१०=कौथु ४,१,६।

अथ द्वितीये खण्डे—

सैषा प्रथमा।

१ २ ३२ ३ २ ३ १ २ ३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्*।
३ २ ३ १ २
सुताविदथेअक्रमुः॥ १ ॥११†

२ ३ ५ २ १ २
ओं॥ (सौभरि द्वे॥) प्रसोमा२३४साः। मदच्युतः।

कविर्मेधावी। "कविक्रतुः" अन्तःप्रज्ञः क्रान्तकर्मा वा सोमः "नप्तोः" अभिषवफलकयोः‡ "हितः" निहितः। "दिवः" द्युलोकस्य "प्रिया" प्रियाणि "वयांसि" वयन्ति गच्छन्तीति वयांसि ग्रावाणः¶ तरनि। [तथाच मन्त्रवर्णः —"श्येना अतिथयः पर्वतानां ककुभः"-इति।] "स्वानैः" अभिषुपवद्भिरध्वर्युभिः "परियाति" गच्छति॥

"स्वानैः"-सुवानैः-इति सामऋचः पाठः॥ १०॥ १०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य प्रथमः खण्डः॥ १॥

---

* "मघोनः"-इति ऋ०, उ०-व्या० वि० च।

† उ० १,२,२१,१=ऋ०९,८,२२,१=ज० १,२,१४;—२१,१,२०।

‡ 'द्यावापृथिव्योः अहोरात्रयोर्वा'-इति वि०।

¶ 'वयांसि अन्नानि पक्षिणो वा'-इति वि०। ग्रावाणस्च सोमाभिषवार्थानि पाषाणविशेषाणि "अभिक्रत्ये"-इति ऋचो व्याख्याने द्रष्टव्यम् (प्र० १७२ पृ०)। निघण्टौ तु ग्रावइति पर्वतइति च मेघनामसु पठ्यते १, १०।

अथ द्वितीया ।

१ २ १२　　३ २ ३ १ २.　३ १ २

प्रसोमासोविपश्चितोपोनयन्तऊर्मयः* ।

१ २　　३ १ २

वनानिमहिषाइव ॥ २ ॥ १२ †

१ २ २ १ ३ ५ १ १

औ२३होवा३ । अवा२सा२३४इना: । ओइमघोना२म. ।

१ १ ३ ५२ २ २२ ३ १ १ १ १

सुता२३ः । वा२इदा२३४औहोवा । थेअक्रम२३४५ः ॥ १ ॥ ११

५ २ २ १ २ १ २ १

प्रसोमासः । वाइपश्चितः । आपो१नाया२ । ता

श्यावाश्व ऋषिः‡ । "सोमासः"¶ सोमाः "मदच्युतः" मदस्राविणः "सुता" सुतः § अभिषुताः सन्तः "मघोनां" हविष्मतां ॥ "नः" अस्माकं सम्बन्धिनि "विदथे" यज्ञे "श्रवसे" ** अन्नाय कीर्त्तये वा "प्राक्रमुः" प्रगच्छन्ति ॥

"मघोनां"—"मघोनः"-इति पाठौ ॥ १ ॥ ११

---

* "अपांनयन्त्यूर्मयः"-इति ऋ० ख, उ०-आ० वि० च ।

† उ० १,२,१९,१ = ऋ० ६,८,२३,१ = ज० ६,२,१२;— ११,३,११;—१४,१,१२—१३—१४;—१८,१,११;—१९,३,१५—१७।

‡ "आत्रेयः"-इति ऋषि-गोत्रं यः ।

¶ असुकिं रूपम् (७, १, ५०) ।

§ सुताद्दति आले रूपम् (७, १, ३९) ।

|| मघं धनम्, इह च तत् हवीरूपम् लक्ष्यमिति भावः ।

** "विदथः"-इति यज्ञ-नामसु पञ्चमं नैघण्टुकम् ।

अथ तृतीया ।

१ २ ३ १ २ ३ २ ३ १ १ २ ३ ३ १ २

पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।

३ २ ३ १ १

विश्वाअपद्विषोजहि ॥ ३ ॥ १३ *

१ र २ १ २ १ २ २ १ २र

ऊर्मयः । वानाश्निमा२। आश्रौ३हो । हिषाइव ।

१ २ १

इडा२३भा३४३ । ओ२३४५इ ॥ २ ॥ १२

त्रितऋषिः† । "विपश्चितः" मेधाविनः "सोमासः" सोमाः "प्र नयन्त" पात्राणि प्रति गच्छन्ति । किमिव ? "अपऊर्मयः" [अपइति षष्ठी व्यत्ययेन द्वितीया ‡] । [अपामूर्मयः अतएव बह्वृचाः—अपान्नयन्तीति पठन्ति] ते यथा सततमुद्भवन्ति तद्वत् । [बाहुल्येऽयं दृष्टान्तः । अथतो गमने दृष्टान्तान्तरमभिधीयते- "वनानि महिषाः" प्रवृद्धा मृगा इव । अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः । द्वितीयस्तु दशापवित्रादधःप्रदेशे ॥ २ ॥ १२

---

* उ० २,१,२,१= ऋ० ७,१, २३, २ ।

† "आप्त्यः"-इति ऋषि-र्निर्गेयः ।

‡ 'व्यत्ययो बहुलम्"-(नै० ३, ३, ८) व्याख्यातमेवं पुरस्तात् (प्र०२,१५प्र०—), मृगेषु यो महान् मृगः तस्य तु नामौ महिष इति प्रसिद्धम् । तथाहि—

"ब्रह्मा देवानाम्पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम्"

—इति ऋग्वेदीया श्रुतिः (९, ५, ११, ६) । "महिषो मृगाणामित्येषम् हि महा भवति मृगाणाम्"-इत्यादि तद्व्याख्यानं यास्कस्य ।

अथ चतुर्थी।

२३ १ २ ३ १ २ ३ १ २
वृषाह्यसि भानुना द्युमन्तन्त्वा हवामहे ।
१ २ ३ ३ १ २
पवमानस्वर्दृशम्* ॥ ४ ॥ १४†

४ ५ र ४ १ १र
(वृषकाणि त्रीणि॥) पवस्वेदो५वृषासुताः। कृधी
र र २ २ ३ ५ १ १०
नोयशसोजनाये३। वाइश्वा३आर२३४पा। द्वार२द्विषार२३४
५र ३ ५
औहोवा। जार२३४हो॥३॥१२

४५र ४ ३ १र २ १ र २
वृषाह्निया। सिभान्र२३ना। द्युमन्तंत्वाहावा१माहा
२१ १ २१ ५ ३ ५
र२३४इ। पवा३। मानसुवोर२३४आ। हृ२३४शाम्॥ ४ ॥

अमहीयुर्ऋषिः‡ ॥ हे "इन्दो" सोम! "सुतः" अभिषुतः "वृषा" सेक्ता त्वं "पवस्व" धारया क्षर। "जने" जनपदेषु "नः" अस्मान् "यशसः" यशस्विनः "कृधि"¶ कुरु। "विश्वा" सर्वान् "द्विषः" द्वेष्टॄन् शत्रून् "अपि जहि" मारय॥ ३ ॥ १३

---

* "पवमानस्वाध्यः"-इति क०।

† उ० २,१,४,१= ऋ० ७,१,१,४।

‡ "आङ्गिरसः"-इति ऋषि नैगेयः।

¶ "शुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)"-इति हिर्भावो हेर्धीबि। ऋचि तु 'कृधी'-इति दीर्घान्तपाठः, स च "द्व्यचः (६, ३, १३५)"-इति योगविभागात् साध्यः।

अथ पञ्चमी।

१.२ ३ १२ ३ १ २ ३ १ ३ २
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिः *।

४ र ‌ र ४ २ १ २र १ र
वृषाद्दियापुस्तिभानुना। द्युमत्तंत्वाहवारमहे।

१ २ १ २र १ २
हाँरइ। ऊ२। होइवां। पवमानसुवर्दशम। हा-

२ २ २
२इ ऊ२। होइवा। ऊवो२४५इ। डा॥ ५॥ १४

भृगुर्ऋषिः।†॥ हे "सोम!" त्वं "वृषा" अभिलषितफलानां वर्षिता "असि हि" भवसि खलु। तस्मात् हे "पवमान" पूयमान पुनान‡ वा सोम! "स्वर्दृशं" सर्वस्य द्रष्टारं¶ "भानुना" तेजसा§ "द्युमत्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा "त्वा" त्वां "हवामहे"॥ यज्ञेषु आह्वयामहे॥ ५॥ १४

* "मती"-इति क०।

† "वाक्ऋषिः भार्गवोजमदग्निर्वा"-इति ऋषि-नैगेयः।

‡ अभिषुत प्रोक्षित इत्यर्थः।

¶ प्र०४८० पृ० द्र०।

§ भानुइति निघण्टावहर्नामसु (१, ९) दृश्यते परमिह सर्वत्र 'अग्निवाचकत्वेन' व्याख्यातमाचार्येण—(प्र० २१९ पृ०, ४५८ पृ०)।

|| कः सम्प्रसारण-बाहुल्येन रूपमिदम् (६, १, ३४)।

३ १२२२३ १ २
ध्वजदश्वऽरथीरिव ॥५॥ १५*

५ २ ३२ ४ ५ ४ ५
(कौम्भ्यस्य सामानि त्रीणि ॥) इन्दु रौहोवाहाइ। घावी।
२१ ३ ५ २२ १ ५ २ १
ष्ठचारइ। तनोर३४हा। हाहोइ। होरहा। प्रियाः-
२२ २२ २ ३ ५ २२ १ ५ २
कवीं। नाम्न। तिरोर३४हा। हाहोइ। होरहा।
१ ३ ५ २२ २ ५ २ १
ध्वजारन्। अश्वोर३४हा। हाहोइ। होरहार। दार
३ ५२२ ३ ५
या२३४ औहोवा। ई२३४वा ॥ ६ ॥

४ ५ ४२ ५ ४ ५ ४ ५ २ २
इन्दुः पविष्ठचेतनःप्रियःकवाइ। ऊ३म ऊम। नाम्ना-
५ १ २ ५ २ १ ३
२३४तौः। ध्वजादार३श्वाभ। ऊ३म ऊ३म। यार्था-
५२२ ३ ५
२३४औहोवा। ई२३४वा ॥ ७ ॥

४ ५ ४२ ५ ५ ५ ४ ४२ ५ ४ ५ ४ ४
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिःद्ध। जा५दश्वाभ।
१ १ १ ३ ५२ २ ३
ओवा२३। ओवा२३। दार थार३४ अ होवा। ई २ ३ ४
५
वा ॥ ८ ॥ १५

* ऋ० ७,१,३३,५।

अथ षष्ठी।

१.२ २१२ १२ ३१र २र ३१
अक्षतप्रवाजिनोगव्यासोमासोअश्वया।

३१२ ३१र २र
शुक्रासोवीरयाशवः॥ ६॥ १६ *

(कार्त्तवेशस्य त्रीणि॥) ५ २ ४ ५४र ५ १ अक्षा२ताप्रवाजिनाः। गा-
१ र १ २ १
व्या२सोमा२। सोअश्वयाश१का२सोवी२। रया२-
१२ १
शवः। ओ२३४५ई। डा॥ ८॥

५ र ५र १२र र र र
अक्षताप्राइवाजिनाः। गव्यासोमासोअश्वया२३-

अस्या उत्तरस्याश्च कश्यपऋषिः†। "चेतनः" प्रज्ञापकः "प्रियः" देवानां प्रीतिकरः "इन्दुः" सोमः "कवीनां" क्रान्तकर्मणां स्तोतॄणां‡ "मति"¶ मत्या स्तुत्या "पविष्ट"§ पवते। "अश्व" इयं "रथीरिव" रथीव ऊर्मि॥ "सृजत" सृजति॥ ५॥ १५

* उ० ४,१,२,१=ऋ० ७,१,२६,४।

† "मारीचः"-इति ऋषि-नैगमः।

‡ प्र०९२८ पृ० ५।

¶ स्वादेशे रूपम् (७,१,३९)।

§ लेटः सिप्पक्षे रूपम् (३, ४, ९४)।

॥ "पङ्क्तीकृतानामश्वानां मसनोन्नमनाकृतिः। ऋतिवेगसमायुक्ता गतिकर्मिकृदाहृता"-इत्यश्वचिन्तामणिः।

अथ सप्तमी ।

१२　३ १ २ ३　१२　१२　३ १ २
पवस्वदेवआयु*षगिन्द्रङ्गच्छतुतेमदः ।
३ १२　२२ ३ १ २
वायुमारोहधर्मणा ॥ ७ ॥ १७ †

१　२ १२ २ २　२ १　१ ५　५२
हाउ । प्रुक्रासोवा३१इ । रया२३ । प्रा२वा२३४ओ-
२　३　५
हावा । ग्वा२३४भी ॥ १० ॥

३ ४　३ ४२ ५　२　४ ५२　२
आसृक्षतप्रवाजिनाः । ए३ । गव्यासोमा । सो३
१ २ २　१　३　५　२ १　५　४
आश्वा३या । प्रुक्रा२सो२३४वौ । रया२३४वा । प्रा५-
५
वो६हाइ ॥ ११ ॥ १६

"वाजिनः" बलवन्तः‡ "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्या" गवेच्छयां¶ "अश्वया" अश्वेच्छया§ "वीरया" वीरेच्छया च॥ "प्रासृक्षत" ऋत्विग्भिः प्रकर्षेण सृज्यन्ते ॥ ६ ॥ १६

---

* "देवायु०"-इति ऋ०, उ०-व्या० वि० च ।

† उ० ५,१,१५.१ = ऋ० ७,१,३४,२ = ज० ४,६,१०—१८—१९ - २० ;—१७,१, १ = कश्च १,२,२४

‡ 'आशवन्तः'-इति वि० ।

¶ प्र०२२३ पृ० द्र० ।

§ ४ प्र० ४११ पृ० द्र० ।

|| अश्वयेतिवत् साध्यः ।

अथाष्टमी।

३ २ ३ १र २र ३ १
पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

४ ५ ४ ५ ३२ १ २
(ग्राम्यदे द्वि॥) पावस्वदि। वया३। वा२या२३४

५र र ३ ५ ४ ५ ४ ५ ३ १
औहोवा। यू२३४षाक्। आइन्द्र गच्छा। तुता३इ।

१ ई ५र र ३ ५ २र
तू२ता२३४औहोवा। मा२३४दाः। वायू२९ह्वा१ई।

१ २ ३ २ १ २ ५र र २
आर२३रा। इधा३। हा२धा२३४औहोवा। मा२-

५
३४णा॥ १२॥

३ ४ ५ र र २ ३ ५ १र १
पवस्वदेवए। चीऐही२३४या। आयुषागै२हीए

२ २ १ २ १ २ १
२हो३या। इन्द्र गच्छतुतेमदए २हीए २हो३या। वायुमा-

२ २ १ ५ ४ ५
रो३१२३। हर्धा२३४त्रा। माधुर्णाईहाइ॥ १३॥१७

निध्रुविः काश्यपऋषिः। हे सोम! "देवः" द्योतमानस्त्वं "पवस्व" धारया चर। अपिच तव "मदः" मदकारोरसः "आयुषक्" अनुषक्तः* यथा भवति तथा इन्द्र प्रति गच्छतु। अपिच

---

* सक्ते रूपम्। आनुषक् आयुषक् इति शाखाभेदेन पठ्यते, "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति"-इति वि०।

१ २ २ २ ३ १
ज्योतिर्वैश्वानरम्बृहत् ॥ ८ ॥ १८*

४ ५ १र २२ ३ ५
(जनित्रे द्वे ॥) पावा । मानो । अजीजार२३४नात् ।

२१ २ र १ १ २
दिवश्चित्राम् । नतन्यतम् । ज्योतिर्वैश्वा२३ । नारा

५२ र २ ५
२३४औहोवा । बृ२३४हात् ॥ १४ ॥

५ र १ २ २ १ २ १
पवमानाः । अजाइजाइनाम् । दिवश्चित्रा२३ए

२ १ र ३ ५ ३ ५ ३
हाइ । नातन्या२३४तूम् । ज्यो२३४ती । वा२३४इ

५ ४ ५ ४ ५
श्वा । मरोवा । बृ५हो६हाइ ॥ १५ ॥ १८

त्वं "वायु" "धर्मणा" धारकेणा† रसेन‡ "आरोह" प्राप्नुहि ॥

"देवआयुषक्"-"देवायुषग्"-इतिपाठौ ॥ ८ ॥ १७

---

* उ० ३, १, २, १ = ऊ० ७, १, ११, १ = ज० १२, १, १२ ;—१८, १, ८—९ ।

† 'धर्मणा कर्मणा'-इति वि० ।

‡ धर्मणेति विविधं व्याख्यातम् । तथाहि—"अतः परेण (प्र०२४८ पृ०)"-इत्यत्र 'धर्मणा आधानादि-कर्मणा'-इति, "घृतवती (प्र० ७७७ पृ०)-इत्यत्र 'धर्मणा धारणेन'-इति इह 'धर्मणा धारकेण रसेन'-इति ; एव मुत्तरत्रापि (ऊ० ६, १, २, ८—उ० २, २, ९, २—३, १, १, २—३, १, १०, ३—३, २, २०, ३—४, २, २, ७—७, १, ७, ३) स्वयं द्रष्टव्यम् ।

अथ नवमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
परिस्वानास*इन्दवोमदायबर्हणागिरा।
१ ० ३ १ २
मधोअर्षन्ति†धारया॥८॥९९‡

४ ५ २र २ २ २
(प्रक्रीडम्॥) पारो। स्वानास। इन्दवोमदायब।
१ २ २ २ २ १ ५ ४
र्हणार३गिरा३४। मधो३४अर्षा३। तिधोर३४वा। रा
५
पुयोईडाइ॥१६॥

४ ५ २र १र १
(सङ्क्रीडम्॥) पारो। स्वानासइन्दवाओवा२३हो

अमहीयुर्ऋषिः¶। "पवमानः" सोम "महत्" महत्
"वैश्वानरं" वैश्वानराख्यं§ "ज्योतिः" तेजः "दिवः" द्युलो-
कस्य "चित्रं" विचित्रं "तन्यतुं न" अशनिमिव॥ "अजीजनत्"
अजनयत्॥८॥९८

---

* "सुवानास"-इति. } ऋ, उ॰-व्या॰ वि॰ च।
† "सुताअर्षन्ति"-इति च }
‡ उ॰ ४,२,१,० = ऋ॰ ६,७,२४,४।
¶ "आङ्गिरसः"-इति ऋषि-नै॰।
§ नि॰ दै॰ १, २१—२३ खण्डाद्रष्टव्याः।
|| 'तन्यतुं विस्तीर्णम्'-इति वि॰। "तनोतेर्यतुच् तन्यतुर्वायुः रात्रिश्च (उ॰४, १)'-इति वि॰ को॰।

अथ दशमी ।

२ ३ १ २  ३ १र  १र ३ १र  २र ३ २
परिप्रासिष्यदत्कवि सिन्धोरूर्मावधिश्रितः ।

१  र  र
वा२३हा२ई या । मदायबर्हणागिरा । ओवा२३होवा
१  र  र  १
२३हा२ई या । मधोअर्षन्तिधारयाऔ।वा२३होवा२३हा
१  ३  ५र र  ३  ५
२ई या२ । वा२३४औहोवा । ऊ२३४पा ॥ १७ ॥

३  र ४  २ ४ ५
(निक्रीडम् ॥) पा५पुरी । स्वाना३सा३इन्दवाः ।
१ ऽर  १ ऽर  १  २  १ र
मदा२यबर्हणा२गिरा । मधो२३अर्षा । ऊर्मिरिवा२ ।
ऽ २  ३ र २ १  २ ४ ५  ४
ई३या । तिधारया । औ३होवा । हो५इ ।डा ॥ १८ ॥
॥ १९ ॥

ह्योः काश्यपोऽसितऋषिः* । "स्वानासः" सुवानाः अभि-षूयमाणाः "इन्दवः" दीप्ताः । "बर्हणा" बर्हत्या† "गिरा" स्तुतिरूपया वाचा "मधो" इति विभक्तिव्यत्ययः (३,१,८५) । मधवो मदकराः सोमाः "धारया" सह देवानां "मदाय" तदर्थं "पर्यर्षन्ति"‡ दशापविचादधः चरन्तीत्यर्थः ॥

"मधो"—"सुता" इति सामऋषः पाठौ ॥ ८ ॥ १९

---

* "देवलो वा"-इति ऋषि-नेगेयः ।

† 'बर्हणा परिवेष्टनेनेति वि० ।

‡ 'ऋषगतौ (तु०-प०)'-इत्यस्य रूपम् । ऋषति, अर्षति-इति च गतिकर्मसु नि० २, १४ ।

२ १र २र ३ १ २
कारु* बिभ्रत्पुरुस्पृहम् ॥ १० ॥ २०†

॥ इति पञ्चम-दशति ॥

॥ इति पञ्चमः प्रपाठकः ॥

५ र २ १ १ र
(औशनम् ॥) परिप्रासि। ष्यदत्कावी २:। सिन्धो
रर ७ १र १ ३ ५र र
रूर्मावाधिश्रिता २:। कारु२३म्। बा२इभ्रा२३४औहो
२ १ ३ १ १ १ १
वा। पुरुस्पृहा२३४५म् ॥ १९ ॥ २०

"परि प्रासिष्यदत्" परिस्यन्दते "कविः" मेधावी "सिन्धोरूर्मावधिश्रितः" आश्रितः सन् "पुरुस्पृहं" बहुभिः स्पृहणीयं "कारुं" स्तोतारं‡ "बिभ्रत्" धारयन् सोमः परिस्यन्दते-इति सम्बन्धः ॥

"कारु"—"कारम्"-इति पाठौ ॥ १० ॥ २०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः ॥ १ ॥

---

* "कारं"-इति ऋ॰।

† ऋ॰ ६,८,३,१।

‡ "कारुः" इति स्तोतृनामसु तृतीयं नैघण्टुकम् (३, १६)।

अथ तृतीये खण्डे—

सैषा प्रथमा।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १र ३र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्द्रन्देवाअयासिषुः॥ १॥ २१ *

२ १ २ २
(यामानि त्रीणि॥) इहा २इहा। उपोषुजातमा २
१ २ १ २
प्तुराम्। इहा। इहा २इहा। गोभिर्भङ्गम्परा २इष्क्
१ २ १ २ २ १
ताम्। इहा। इहा २इहा। इन्द्रन्देवाअया २सिषुः।
२
इहा१॥ ३०॥

१ २ २ १ २ १
ऊपोषुजातमा २प्तुराम्। उपा। गोभा२३इहाइ।
१ १ २ १र
भङ्गम्परा २इष्कृताम्। उपा। इन्द्र२३९होइ। देवा
१ २ २
अया २। सिषुरा३१ओवा२३। ऊ२३४पा॥ २१॥

४ ५र ४र ५ १ २ ३ ५ २
उपोषौ। होइजाताम्। आप्तू३राम्। औ३होइ
२ १ २ ३ ५ १ ० ७ १
वा३। गोभिर्भा२३४ङ्गाम्। ओइपारिष्कृता २म्। इन्द्रू
२ २ ५र २ २ २ ३ १ १ १ १
२३म्। देवा३४औहोवा। अयासिषू२३४पुः॥ २२॥ २१

* उ० १,२,१७,२—५,२,२०,१ = ऋ० ७,१,२०,१ = कौ० ६,१,५;—१९,२,११।

अथ द्वितीया।

२ १ २ ३ ३उ २ २ ३ १२
पुनानोअक्रमीदभिविश्वामृधोविचर्षणिः।
३ २ ३ १ २ ३ १२
शुम्भन्तिविप्रन्धीतिभिः॥ २ ॥ २२ *

२ र २ ३ ५ १
(वैरूपम् ॥) पुनानोआ। क्रामीदा२३४भी। वि-
३ ५ २ ३ ५ १ ३ ५
श्वा२मा२३४र्द्धाः। वीचर्षा२३४णीः। शुभा२ता२३४इवी।
१ २ ५ र २ ३ ५
प्रा२घा२३४औहोवा। ती२३४भीः॥ २३ ॥ २२

अमहीयुर्ऋषिः† । "सुजातं" सम्यक् प्रादुर्भूतम् "अप्सु" वसतीवरीभिः प्रेरितं‡ "भङ्गः" शत्रूणाम्भञ्जकं¶ "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् संस्कृतम्। "इन्दुं" सोमं "देवाः" इन्द्रादयः उपायासिषुः "उपगच्छन्ति ॥ १ ॥ २१

§"विचर्षणिः" द्रष्टा॥ "पुनानः" सोमः "विश्वाः" सर्वाः

---

* ऋ० ३,१,१२,१ = ऋ० ९,८,३०,१ = ज० १,२,१२;— २२,२,११—१२—१३।

† "आङ्गिरसः"-इति ऋषि-मेयः।

‡ 'अप्सु भवतीति अप्सुरम्'-इति वि०।

¶ 'भङ्गं भज्यते ग्रावभिः'-इति वि०।

§ नेदं सायणीयर्षिसंवादी दृश्यते, तदिदं च मूलं लेखकप्रमादमित्यनुमीयते, "बृहन्मतिः आङ्गिरसः"-इति तु ऋषि नै०।

|| "विचर्षणिः"-इति पश्यतिकर्मसु षष्ठं नैघण्टुकम् (३,११)। 'विचर्षणिः विविधं पश्यन्ति सर्वे वा पश्यन्ति'-इति वि०।

अथ तृतीया ।

२ २ २ १ २ ३ २उ ३ १ २ ३ १र २र

आविशन्कलशꣳसुतोविश्वाअर्षन्नभिश्रियः* ।

३ १ २

इन्दुरिन्द्रायधीयते† ॥ ३ ॥ २३‡

५र २ ४ १

(औशने द्वे ॥) आविशन्कालाईशꣳसुताः । वाइ-

१र १ २ १ २ ५ २ १ २ ३

श्वाअर्षन् । अभाइश्रायाइः । ओ२होइ१ औवा । ओ

३ १ १ १ ३ ५र र २र

२३४हाइ १ इन्दुर२३ः । आ२इन्द्रार२३४औहोवा । यधी

३ १ १ १ १ १

यते२३४५ ॥ २४ ॥

"मृधः"¶ शत्रुसेनाः "अभ्यक्रमीत्" अभिक्रामति§ । "विप्रं" मेधाविनं तं॥ सोमं "धीतिभिः"** अङ्गुलिभिर्वा "शुम्भन्ति"†† अलं कुर्वन्ति ॥ २ ॥ २२

---

* "स्पृहः,"-इति, † "शरोनगोषुतिष्ठति"-इति च ऋ० ।

‡ ऋ० ७, १, ९७, ४ ।

¶ "मृधः"-इति सङ्ग्राम-नामसु विंशं नैघण्टुकम । 'मृधः—सङ्ग्रामान् शत्रून्'-इति च वि० ।

§ सार्वकालिको लुङ् (३, ४, ६)।

॥ "विप्रः"-इति मेधाविनामसु प्रथमं नैघण्टुकम् (३, १५)।

** "धीतयः"-इति अङ्गुलिनामसु सप्तमं नैघण्टुकम् (२, ५)। 'धीतिभिः-कर्मभिर्बुद्धिभिर्वा'-इति वि०। वस्तुतो धीतिशब्दो बह्वर्थः ।

†† 'शुम्भ शोभायाम (भ्वा० प०)'-इत्यस्य रूपम । 'शुम्भन्ति शोभन्ते अलङ्कुर्वन्ति'-इति च वि० ।

अथ चतुर्थी।

१२३ २३ १२ ३ १२ ३क २र ३ २
असर्जि रथ्यो यथा* पवित्रे चम्वोः सुतः।
१२ ३ १ २
कार्ष्मन्वाजी न्यक्रमीत् ॥ ४ ॥ २४†

४र ३ ४ ५ ३ २ ४ ५ १ २
आविशन्कलशम्। सुता३ः। वाइश्वाः। अर्षन्।
१ २ ३र र ५ १ २र
अभाइआया। औहोहोर३४वा। औहोहो१इ। इ-
२ १र २ ५र र ३
न्द्रा१इन्द्रा२। य। धीया२ता२३४औहोवा। ऊ-
५
२३४पा ॥ २५ ॥ २३

‡"सुतः" अभिषुतः "सोमः" "कलशं" द्रोणम् "आ विशन्" "विश्वाः" सर्वाः "श्रियः" सम्पदः "अभ्यर्षन्"¶ अभितो गमयन् "इन्दुः" दीप्तः सोमः§ "इन्द्राय" इन्द्रार्थं "धीयते" दशापवित्रे अध्वर्युभिर्निधीयते‖ ॥ ३ ॥ २३

---

* "यथा"-इति ऋ०।

† ऋ० ६, ८, २९, १।

‡ इहापि सायणीयर्षिसंवादो नास्ति। 'असितः काश्यपः'-इति ऋषि-नैगेयः

¶ "अर्षति"-इति गतिकर्मसु पठ्यते, तस्यैव रूपमिदम् (नै० २, १४)।

§ योगार्थो दीप्तः स इह विशेषणम्, रूढार्थः सोमः स एव विशेष्यं पदम्।

‖ "अभिस्पृहः"-इत्येव विवरण-सम्मतः पाठ, अतएवोक्तम्,—'अर्षन् यान्ति, अभिस्पृहः स्पृहणीयाः'-इति ॥

अथ पञ्चमी ।

२३ ३ १ ३१ ३ २ ३ २ ३ १ २
प्रयद्गावो*नभूर्णयस्त्वेषाअयासोअक्रमुः† ।
१ २ ३ २३ ३ २ २
घ्नन्तःकृष्णामपत्वचम् ॥ ५ ॥ २५ ॥

५ २ १२ २
(सोमसाम ॥) असर्जिरां । थि । योया२३था । प-
१ २२ १ ७ २ ५ २२ १ २ १
वित्रे । चा । मुवो२ः स्व२३४ताः । काष्म न्वा२३जी । नि-
२ १ ४ ५ ४
यक्रमाइत् । औ२३होवा । हो५इ । डा ॥ २६ ॥ २४

प्रभूवसुरृषिः‡ । "रथ्योयथा" रथसम्बन्धी अश्व इव स यथा विसृज्यते यद्वा तद्वत् "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः सोमः "असर्जि" "पवित्रे" सृष्टोऽभूत् । तथाभूतो "वाजी" वेगवान् ¶ सोमः "कार्ष्मन्" §. कार्ष्मणि युद्धे इतरेतराकर्षणात् । अत्र देवानामाकर्षणवति यज्ञाख्ये सङ्ग्रामे "न्यक्रमीत्" नितरां क्रामति ॥ ४ ॥ २४

---

* "प्रमेगावो" इति ऋ० ।

† उ० ३, १, ३, १ = ऋ० ६, ८, ३४, १ ।

‡ "आङ्गिरसः"-इति ऋषि-नैमेयः ।

¶ 'वाजी अन्नवान्'-इति वि० ।

§ "कार्ष्मन्"-इति सुब्लुकि रूपम् (७, १, ३९) । युद्धार्थे प्रवृत्तिनिमित्त माह—इतरेतराकर्षणादिति । यज्ञेऽपि तदेव प्रवृत्ति निमित्तमिति दर्शयन् इष्टाम्न विधिं सङ्गमयति अत्रेत्यादिना ।

४ ५ १२र
(काण्वं द ॥) प्रयद्गाउ। गावोनाइभूर्णा१या२३४ः।
१र २ १ २र र १ २
त्वे.षाइः। आया२सोअक्रमुः। घ्नन्ताःकार२३ष्णाम्। अ
१ २ र १ ३ ५र र २ ५
पात्वचम्। औहो२हा२३४औहोवा। ऊ२२३४पा॥२७॥
२१२ ४र ५र १ र २ र १ ०
प्रयद्गा३निभूर्णयाः। त्वाइषाअया। सोअक्रमू२३ः।
१ र ५ १ ३ ५र र १२१ ० १११
घ्ना२३४न्तोहाइ। का२ष्णा२३४औहोवा। अपत्वचा२३४
५म्॥२८॥२५

मेध्यातिथिर्ऋषिः*। "यत्" ये "भूर्णयः"† क्षिप्राः "त्वेषाः" दीप्ताः‡ "अयासः" अयाः गमनकुशलाः "कृष्णां"¶ "त्वम्" "अप घ्नन्तः" अभिषवेण निरस्यन्तः [त्वचिः सम्बरणकर्मा§ (लु०प०)। इत्थम्भूताः सोमाः "प्राक्रमुः" यज्ञं प्रवर्त्तयन्ति। तत्र दृष्टान्तः—"गावोन" उदकानीव‖, तानि यथा क्षिप्रमधः पतन्ति तद्वत्। गावएव वा उपमीयते तायथा स्वगोष्ठमाशु

---

* "काण्वः"-इति ऋषि० नै०।

† 'भूर्णयः भरणशीलाः'-इति वि०। भूर्णयः-भ्रमणशीलाः, भरणशीलाश्चान्यत्र (प्र० ६१० पृ० द्र०);

‡ 'त्विषदीप्तौ (भ्वा० उभ०)'-इत्यस्य रूपम्। 'दीप्ता-अश्वाः'-इति वि०

¶ कृष्णां रात्रिं कृष्णरूपाम्, अपत्वचं अपगां रात्रेः कृष्णाम्'-इति वि०।

§ सम्बरणमाच्छादनम्।

‖ गोशब्दो बवर्थः परमुदकार्थो न नैघण्टुकः।

अथ षष्ठी ।

२ ३ १ २ ३ १ २ २ ३ १ २ ३ २
अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
३ १र २र ३ १ २
नुदस्वादेवयुं जनम् ॥ ६ ॥ २६

५ ४र ५ १ २
(वैश्वदेवम् ॥) अपघ्नौ । होइपावा । साइमा१र्द्धा
१ २ र १ २ १ १
२: । क्रातुवित्सो । ममात्सा१रा २: । नुदा२३ । स्वा-
३ ५र र २ १ ११११
२दा२३४औहोवा । वयुंजवा२३४५म् ॥ २९ ॥ २६

गच्छन्ति† तद्वत् । अथवा गावः स्तुतिवाचः‡ ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यज्ञं प्रवर्त्तयन्ति¶ तान् स्तुवे—इति शेषः ॥

"यत्"-"ये" इति साम्नऋचः पाठौ ॥ ५ ॥ २५

अस्याः पवमानस्य निध्रुविर्ऋषिः§ । हे "सोमः !" "मत्सरः" मदकरः ॥ यः त्वं "मृधः" हिंसकान् शत्रून्** "अप घ्नन्" मारयन्

---

*. उ० ५, १, १५. १=ऋ० ७, १, ३४, ४=ऋ० ४, २, १७—१८—१९—२०;—१७, १, १;—ऊह्यं १, २, २ ।

† अरुणो गाव उषसां याद्रमभूताः (१, १५ नि०) ।

‡ निघण्टु-प्रथमैकादश द्रष्टव्यम् ।

¶ 'गावः रश्मयः'-इति वि० । 'गावः'-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५) ।

§ "काश्यपः"-इति ऋषि-वैगेयः ।

‖ 'मदनीयोभक्षणीयश्च'-इति वि० ।

** 'मृधः सङ्ग्रामान् पाप्मनश्च'-इति वि०

अथ सप्तमी ।

१ २ ३ १ २ र २ ३ २ ३ १ २
अयापवस्वधारयायया सूर्य्यमरोचयः ।
३ १र २र ३ २
हिन्वानो मानुषीरपः ॥ ७ ॥ २७*

५र र २ १
(वैश्वदेवं सूर्य्यसाम ॥) एअयापवा । स्वधा२ । र
२ २ ५ १र र १ २
याउ१उवा२३ । ऊ३४पा । ययासूर्य्यमरो२ । चया३१
२ ५ १ र र र १
ओवा२३ । ऊ३४पा । हिन्वानोमानुषा२२इर्दोइ । आ-
२ २
पआ३१उवा२३ । ऊ२३४पा ॥ १० ॥ २७

"क्रतुवित्" अस्मभ्यं प्रज्ञां प्रयच्छत् † "पवसे" चरसि स त्वं "अदेवयुं" अदेवकामं जनं‡ राक्षसवर्गं "नुदस्व" प्रेरय ॥ ६॥ २६

हे सोम! "मानुषीः" मनुष्याणां हितानि ¶ "अपः" उदकानि "हिन्वानः" प्रेरयन्§ त्वं "यया" धारया "सूर्य्यम्"

---

* उ० ५, १. ८, १=ऋ० ७, ३१, २ ।

† 'क्रतुवित् कर्मवित्'-इति वि० ।

‡ यो देवान् यष्टुं न कामयते इत्यर्थः ।

¶ 'मनुष्याणां भवाः'-इति वि० ।

§ हिन्वान इति 'हिवि प्रीणने (स्वा० प०)'-इत्यस्य रूपम् । 'हिन्वानः सेवमान'-इति वि० ।

अथाष्टमी ।

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।
१ २ ३ १ २ ३ २ १ २ ३ २
ववृवांसं महीरपः ॥ ८ ॥ २८ †

(वार्त्रघ्नम् ॥) सहो३४३इ । पवस्व । य आ२
विथा । इन्द्रं वृत्रा३ । याहन्ता२३४वे । ओवा३ओवा ।
ववृवा२३४साम् । माहीरपा । औ३होवा । होपइ ।
डा ॥ ३१ ॥ २८

"रोचयः" प्रकाशयः । तथा "अया" अनया धारया "पवस्व" क्षर ॥ ७ ॥ २७

अमहीयुर्ऋषिः‡ । हे सोम ! यस्त्वं "महीः" महतीः "अपः" महान्त्युदकानि "ववृवांसं" निरुन्धानं¶ "वृत्राय" वृत्रं§ "हन्तवे"‖ हन्तुं "इन्द्रम्" "आविथ" अरक्षः** "स" त्वं "पवस्व" धारया क्षर । सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि रुन्धानं वृत्रं जघानेत्यर्थः ॥ ८ ॥ २८

---

* "वव्रिवांसं"-इति सर्वत्राख्यान-स्येम: पाठो गानग्रन्थसम्मतश्च ।

† ऋ० ७, १, २२, १ ।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः ।

¶ 'वव्रिवांसं' आवरणस्वभावम्'-इति वि० ।

§ 'वृत्राय मेघाय'-इति वि० ।

‖ "तुमर्थे सेसेन् (३, ४, ९)"-इत्यादिना सिद्धम् ।

** 'आविथ अर्कं तर्पणार्थस्य, तर्पयसि'-इति वि० ।

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ २ ३ २
अयावीतीपरिस्रवयस्तइन्द्रोमदेष्वा।
३ १ २ ३१ २र
अवाहन्नवतीर्नव ॥ ९ ॥ २९*

५ र र २र १
( सोमसामानि त्रीणि ॥ ) अयावीती। पारिस्रवा।
२ १ २र १ १ २ २ २ १
यस्तइन्दाउ। मादाइषुवा। अवाहा३न्ना३। वतो२३
५ ४ ५
४वा। नापुवो६हाइ ॥ २२ ॥
१ १र र २ २र १ २ २र २ २र र
अयावीता। औहोवा। औहो३४इ। औ। होर।
२ ५र र १ २ १ १ २र १
वा२३४। औहोवा। परिस्रव। यस्तइन्दा। औहो
२ २र २र १ २ ५र र
वा। औहो३४इ। औ। होर। वा२३४। औहोवा।
१ ३र १र र १ ३र १ २ ३र २
मदे२षुवा। अवाहन्ना। औहोवा। औहो३४इ।
२र १ २ ५र र २१र १ १ १ १
औ। होर। वा२३४। औहोवा। वतीर्नवा२३४५ ॥ २३॥
४ ३ २ ४ २ ४ ५ १ २ र १
अया५पुवो। वा३इपा३रिस्रवा। यास्तइन्दो। मदा

* उ० ५, १, ६, १ = ऋ० ६, ७, १६, १।

अथ दशमी।

१ २ २ १२ २१ ३१२ ३१ २ १ २

परिद्युक्ष७सनद्रयिम्भरद्वाजंनोअन्धसा।

१ २ २ ३ १ २ १ २ ४ ५

इषू१वा२। अवाद्वा३न्वा। वतोर्नवा। औ३होवा।

४

होा५इ। डा॥ ३४ ॥ २८

असहोयुर्ऋषिः*। हे "इन्द्र" सोम! "अया" अनेन् रसेन "वीती"† वीत्यै इन्द्रस्य भक्षणाय‡ "परिस्रव" परि-क्षर। कीदृशेन रसेनेत्यत आह "ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु॥ "नवतीर्नव" नवनवति-सङ्ख्याकाः§ शम्बरपुरीः‖ "अवाहन्" जघान (अस्य सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकान् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः॥ ८॥ २८

---

* "आङ्गिरसः"-इति ऋषि-निर्णयः।

† प्रा० ६, २, ९६। उ०, १, २९।

‡ "वीतिः कान्तिः, मार्गो वा तेन परि स्रव परितः समन्तात् स्रव'-इति वि०। इष्टयये कान्तिकर्मणो वेतेरिदं (नै० २, ६, २) रूपमिष्टम्।

॥ 'मदेषु पुरतोऽवस्थितेषु'-इति वि०।

§ षट्शतानि दशोत्तराणि।

‖ शम्बरमिति निघण्टौ मेघनामसु (१, १०)—उदकनामसु (१, १२) बलनामसु (२, ९) च दृश्यते। ऐतिहासिकास्तु शम्बरनाम दैत्यविशेषः, तद्वधोपाख्यानं भागवतादौ (१०, ५५) द्रष्टव्यम्।

३ १ २ ३ २ ३ २
स्वानोअर्षपवित्रआ ॥ १० ॥ ३० *

॥ इति प्रथम-दशति ॥

५ १
(भारद्वाजम् ॥) परिद्युक्षाम्। औहो। सनद्रायी

१ र २र
२म्। भरद्वाजा२म्। औहो। नोअन्धासा२३४। स्वा

२ ३ २ ४ ५ ४ ५
नो३४अर्षा३। पवीवा। त्रापुयोई४हाइ ॥ ३५ ॥ ३०

॥ इति ग्रामे गेये त्रयोदशः-प्रपाठकः ॥

उचथ्यऋषिः† । "द्युक्ष" दीप्तं‡ "सनत्" दीयमानं¶ सैन्य वा "रयिम्" धनं यस्य तादृशं "वाजं" बलं "अन्धसा"§ अन्नेन सह सोमः "नः" अस्माकं‖ "परिभरत्" परतोहरतु प्रयच्छत्वित्यर्थः। अथ प्रत्यक्षस्तुतिः---हे सोम! "स्वानः" सुवानोऽभिषूयमाणस्त्वम् "पवित्रे" "आर्ष" आभिमुख्येन-चर।

"द्युक्ष९ सनद्रयिं"-"द्युक्षःसनद्रयि"-इति, "स्वानः"-"सुवानः"-इति च सामऋचः पाठौ ॥१० ॥ ३०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऋ० ७, १, ९, १।

† "आङ्गिरसः"-इति ऋषि नै०।

‡ "द्युतौ चियम्नइति द्युक्षम्'-इति वि०।

¶ 'सनत् चिरन्तनम्'-इति वि०।

§ 'अन्नसा तर्पितः'-इति वि०।

‖ "नः अस्मान् प्रति'-इति वि०।

अथ चतुर्थे खण्डे—

सैषा प्रथमा ।

१ २　३ २　३ १ २ ३　२　३ १ र　२ र ३ २
अचिक्रदद् वृषा हरिर्महान्मित्रो न दर्शतः ।
१र　२र
सꣳ सूर्येण दिद्युते ॥ १ ॥ ३१

औहोवा ॥ (वार्षाहरम् ॥) अचिक्रदा३त् । अचिक्रदा ५दे । वृषाहरा३इ । वार्षाहरा३इ । वृषाहरा५ए महान्मित्रा३ः । माहान्मित्रा५ए । महान्मित्रा५ए । नद र्शता३ः । नादर्शता३ः । नदर्शता५ए । सꣳसूरिया३इ साꣳसूरिया३इ । सꣳसूरिया५ए । णादिद्युता३इ । णदि द्युता३इ । णदा५इद्युताउ । वा ॥ १ ॥ ३१*

मेध्यातिथिर्ऋषिः†। "वृषा" कामानां वर्षकः "हरिः" हरित वर्णः "महान्" पूज्यः "मित्रोन" यथा सखा तद्वत् । "दर्शतः" दर्शनीयोयः सोमः "अचिक्रदत्" शब्दङ्करोति सोयं सोम "सूर्येण" सह "दिद्युते" दिवि प्रकाशते ॥ ["दिद्युते"-"रोचते" -इति सामऋचः पाठौ ॥ १ ॥ ३१

---

* उ० ४, १, ३, ९ = ऋ० ६, ७, १९, १ ।

† "काण्वः"-इति ऋषि-मै० ।

अथ द्वितीया।

२ ३ १ २ ३ १ ३१ २ ३ १ २
आतेदक्षम्मयोभुववह्निमद्यावृणीमहे।
३ १ २३ १ २
पान्तमापुरुस्पृहम् ॥ २ ॥ ३२*

५ र २ २ १ २ २
(वार्षानि त्रीणि ॥) आतेदक्षाम्। मयोभूवाम्।
१ २ १ ७ ३ ५ १ २ ५ २
वह्निम। द्या। वृणोरमा२३४ हाइ। पान्तमा३। ई३या।
१ १ ३ ५ र २ १ ५
पुरू२३। स्पृ२हा२३४ औहोवा। ऊ३२३४पा ॥ २ ॥
२ १ ५ २ ३ ५ २ ध
आतेदा२३४क्षाम्। मायोभू२३४वाम्। वह्नि-
३र ध ५र ३ ५ १ २ २ ५ २
मद्यावृणो। मद्दो२३४ हाइ। पान्ता३मा३। ई३या३।
१ ३ ५र र ३ ५
पूरु२३४ औहोवा। स्पृ२३४हाम् ॥ ३ ॥
३र ४र ३ ४ ५ ३ ५ ३ ४ ३र ४ ५ र
आतेदक्षम्मयः। भुवो२३४हाइ। वह्निमद्यावृणो।
३ ५ १ २ १ २ १
मद्दो२४४हाइ। पान्ता१मा२। पूरुस्पृहम्। इडा२३
२ १
भा३४३। ओ२३४५इ। डा ॥ ४ ॥ ३२

* उ० ४, २, २, १० = छ० ७, २, ७, २।

अथ तृतीया ।

१ २ ३ १ २    ३ १र    २र ३ १ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमम्पवित्र आनय ।
३ १ २    ३ १ २
पुनाहीन्द्रायपातवे ॥ २ ॥ ३२*

२ १    ५    २ १    २ २
( वैरूपे द्वे ॥ ) अध्वर्यो२३४आ । द्रिभाइः सुऽ३ता
१र   ३    ५    १ २    १
ऽ३म् । सोमा२म्पा२३४वी । त्राआ१नाया२ । पुना-
र २    ५र र    २र १ २ ३ १ १ १ १
र३ । हीन्द्रां३४औहोवा । यपातवे२३४५ ॥ ५ ॥
४ ५ र    ५    ५    २    १    ५    २    २
अध्वर्यौ । होअद्री । भिःसुतम् । औ३हो३वा३ ।

भृगुर्ऋषिः† । हे सोम ! यष्टारो वयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे । कीदृशम् ? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" शत्रुभ्योरक्षकम् । "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति ॥ २ ॥ ३२

---

* उ० ५, १; ११, १ = ऋ० ७, १, ८, १ = ऋ० ४, १, २० ;—४, २, १—२—४—५ ;—१६, २, १२—१४ ।

† 'वारुणिः—भार्गवो वा जमदग्निः'-इति ऋषि-मै० ।

‡ 'वह्नेर्यागिकार्थ एवेष्टः' ( भा० उ० ) ।

दक्ष,

अथ चतुर्थी ।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः ।
३ २ ३ १ २
तरत्समन्दीधावति ॥ ४ ॥ ३४*

१र २ ५ १ २ १ १
सोमारम्या२३४वी । ओवाआ२नाया२ । पुना२३ । द्वार२इ
३ ५र र २ १र २ ३ १ १ १ १
न्द्रा२३४औहोवा । यपातवे२३४५ ॥ ६ ॥ ३२

५ २र १ २ १र
(तरन्तः ॥) तरत्समा । दीधावा१ता२३इ । धारा-
३ ५ २ १ १ ३ ५र र १
२सू२३४ता । स्यआ२३१धा२सा२३४औहोवा । तरत्सम
र २र २ १ १ १ १
न्दीधावती२३४५ ॥ ७ ॥ ३४

उचथ्यऋषिः† । हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं सोमं "पवित्रे" "आनय" प्रापय । एतदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय‡ ॥

"पुनाहि"-"पुनीहि"-इति, "आनय"-"आसृज"-इति च साम्नऋचः पाठः ॥ ४ ॥ ३३

---

* उ० ८, १. ५, १ = ऋ० ७, १, १५, १=आर० १, २, १४।

† "आङ्गिरस"-इति ऋषि-सै० ।

‡ 'पूतं कुरु'-इति स्पष्ट विवरणं ।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
आपवस्वसहस्रिणꣳरयिꣳसोमसुवीर्य्यम्।
३ १२ १२
अस्मेश्रवाꣳसिधारय॥ ५॥ ३५*

५र २ १
(सोमसाम॥) आपवस्वा। सहस्रिणम्। ऊवाइ।
१ २ १२ २ २ १
ऊवा२३हो। रयिꣳसोमा। सुवीरियाम्। ऊवाइ।
१ २ २ १ २ २ १
ऊवा२३होइ। अस्मेश्रवा। सिधारया। ऊवाइ। ऊवा
१ ३ ५र २ ३ ५
२३हो२। वा२३४औहोवा। ऊ२३४पा॥ ८॥ ३५

निध्रुविः काश्यप ऋषिः†। हे "सोम!" त्वं "सहस्रिणं" बहुसङ्ख्याकं "सुवीर्य्यं" शोभन-सामर्थ्योपेतं "रयिं" धनं "आ पवस्व" आभिमुख्येन क्षर। अपिच "अस्मे"‡ अस्मासु "श्रवांसि" अन्नानि "धारय" स्थापय॥ ५॥ ३५

---

* ऋ० ७, १, ३०, १।

† "काश्यपः"-इति ऋपि-नै०।

‡ अस्मे इति, अस्मदः सप्तविभक्तिकमेव रूपं भवति। तत्र सुपामित्यादि (७, १, ३९) शेश्छन्दसीति च (६, १, ७०) सूत्रं स्मर्त्तव्यम्। तत्सप्तधैव श्रूयते बहुचि। तद्यथा—"अस्मे ते बन्धुः (१, २, १५, ७)"-इत्यत्र वयमित्यर्थः। "अस्मे यातं नासत्या सजोषाः (३, ३, १, १९)"-इत्यत्र अस्मानित्यर्थः। "अस्मे समानेभिर्वृषभ पौंस्येभिः (३, ३, ७, १०)"-इत्यत्र अस्माभिरित्यर्थः। "अस्मे प्रयन्धि मघवन्नृजीषिन्

अथ षष्ठी।

१ २ ३ १ २ ३ १ २ ३ १र २र

अनुप्रत्नास आयवः पदन्नवीयो अक्रमुः।

३ १ २ ३ १ २

रुचे जनन्त सूर्य्यम् ॥ ६ ॥ ३६ *

५ र र ५ २ १

(सूर्यसाम ॥) अनुप्रत्नास आयाईवाः। पदन्न-

र र ० २ ३ १ २

वीयो अक्रमूः। रुचाइजना। वाइसू। ऊम्माये३।

५

रो२३४याम् ॥ ८ ॥ ३६

†"प्रत्नासः" पुराणाः केचिद् "आयवः" गमनवन्तोऽश्वाः "नवीयः" नवतरं "पदं" "अन्वक्रमुः" अनुक्रमन्ते (रूपकव्यवहारेण सोमाः स्तूयन्ते) "रुचे" दीप्त्यै तदर्थं "सूर्य्यं" "जनन्त" जनयन्ति‡ ॥ ६ ॥ ३६

---

(६, ४, ४, १३)"-इत्यत्र अस्मभ्यमित्यर्थः। "अस्मे आराचिद् द्वेषः सनुतर्युयोतु (६, ६, १०, २)"-इत्यत्र अस्मदित्यर्थः। "ऊर्व इव पप्रथे कामो अस्मे (७, ३, १, १०)"-इत्यत्र अस्माकमित्यर्थः। "अस्मे धत्त वसवो वसूनि (७, ४, ८, ५)"-इत्यत्र अस्मास्वित्यर्थेति ॥

* ऋ० ६, ८, १३, २।

† ऋषिः स एव।

‡ ऋग्वेदे विवरणम्—"अनुप्रत्नासः पुरातनाः आयवः मनुष्याः वसिष्ठादयः पदं पद्यते उत्पाद्यते संसारात् नवीयो नवतरं अस्मिन् कल्पे अक्रमः क्रमितवन्तः अवेदीतार्थं जनन्त अजनयन्त सूर्य्यम्।"-इति ॥

अथ सप्तमी ।

१ २ ३ १ २ ३ २र २र ३ १ २
अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत् ।
३ २ ३ २ ३ २
सीदन्योनौवनेष्वा ॥ ७ ॥ ३७*

(दाढेच्युतानि त्रीणि ।) अर्षा । इहा । सोम
द्युमा२त्तमा । इहा । अभाइ । इहा । द्रोणानिरो२
रुवा । इहा । सीदा । इहा । योनौवना२इषुवा ।
इहा२ ॥ १० ॥

४ ५ १र र २ १
अर्षाहाउ । सोमद्युमत्तमो । भिद्रो२३णा । निरा
२ २ १ र २ १र २ २
औ३हो । रुवा२३त् । सीदाउवा । योनौवा३ने ।
१ २ ५
ऊम्मायि३ । षू२३४वा ॥ ११ ॥

२ ४र ५र ३ २ ३ ४र ५र १ २
अर्षासोमद्युम । त्तमाः । अर्षासोमा । द्युमत्तमः ।
१ २ र १ २ १र १ १ र १ २
अभिद्रोणा२३हा । भिरोरुवत् । साइदन्योना२३ऊहाइ ।
१ २
वनाइषू३३वा३४३ । ओ२३४५इ । डा ॥ १२ ॥ ३७

* उ० ९, २, ११, १ = ऋ० ७, २, ४, ४ = ऊह्य २, १, २— ४ ; — ७, २, १३ =
ऊह्य १, १, ११ ;— १, २, १३ ;— २, १, ३ ।

अथाष्टमी ।

१ २ ३१ २ ३ १ २ ३ १ २

वृषासोमद्युमाꣳअसिवृषादेववृषव्रतः ।

३ १ २

वृषाधर्म्माणिदधिषे ॥ ८ ॥ ३८.*

(वृषकम् ॥) वृषासोमा । द्यु मा ꣳ २ आसा

२इ ।' वृषादेवा२वा२इ । वार्षव्रा२३४ता: । वृषाधर्मा

भृगुर्ऋषिः† । हे "सोम !" "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "द्राणानि" (प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम्) द्रोणकलशानभिलक्षीकृत्य "रोरुवत्" पुनः पुनर्भृशं वा शब्दं कुर्वन् "अर्ष" आगच्छतु दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु । तत्र दृष्टान्तः—"वनेषु" वनसीयेषु‡ यक्षेषु वनसम्बन्धिषु यक्षगृहेषु वा¶ "योनौ" स्थाने§ "आसीदन्" यक्षा । वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यक्षगृहं अभ्यर्षयति सम्बन्धः ॥

"सीदन्योनौवनेष्वासीदन्"-"श्येनोनयोनिमितिसाम्नऋचः पाठौ ॥ ७ ॥ ३७

* उ० २, १, ३, १ = ऋ० ७, १, २९, १ ।

† 'भृगुर्वारुणिः'-इति ऋषि-नैगेयः ।

‡ 'वनभुगः सम्भक्ती (भ्वा० प०)'-इत्यस्येदं रूपमिष्टमित्यभिप्रायः ।

¶ 'वनेषु उदकेषु'-इति वि० ।

§ "योनिः"-इति उदकनामसु चतुर्दशं नैघण्टुकम् (१, ४) ।

अथ नवमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः।

१ २ ३ १ र २ र
इन्दो रुचाभि गा इहि ॥ ९ ॥ ३९

५ २ १ २ २ १
३। ई३या। णाइ दध्रि रे। इडा२३भा३४३। ओ२३४५ इ। डा ॥ १२ ॥

५ र २ र र र २
(ऐषम ॥) इषे पवा। स्वधारयौ होवा३ हा३४।

५ र र २ १ ५ र र र १ २ ३ २ र ३ ५ र २
औहोवा। मृज्यमा२नो मनीषिभिः। इन्द्रो रुचा। अभि

र र २ ५ र र १ २ ३ १ १ १ १
गौहोवा३हा३४। औहोवा। उप। इन्द्री२३४५ ॥ १४ ॥ ६९

कश्यप ऋषिः†। हे "सोम!" "वृषा" कामानां वर्षकस्त्वं "द्युमान्" दीप्तिमान् "असि"। अपि च हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः"‡ वर्षणशीलकर्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्माणि"¶ देवानां मनुष्याणां च हितानि कर्माणि "दध्रिषे"-"दधिषे"-इति पाठौ ॥ ८ ॥ ३८

---

* उ० २, २, ४, १ = ऋ० ७, १, ३८, ३।

† "मारीचः"-इति ऋषि-नै०।

‡ "व्रतम्"-इति कर्मनामसु सप्तमं नैघण्टुकम् (२, १)।

¶ 'धर्माणि धारणानि'-इति वि०।

अथ दशमी ।

३ १ २   ३ १ २ ३ १ २   १ २

मन्द्रया सोम धारया वृषा पवस्व देवयुः ।

३ १ २   ३ २

अव्यावारेभिरस्मयुः ॥ १० ॥ ४० ॥*

५ र   २ १ र   र

(श्यावाश्वम् ॥) मन्द्रयासो । मधारया । वृषापा

२   १   २   १   १ २

२३वा । स्वदाइवा२३यू: । अव्या२३: । वा२रा२३४

३ र र   २ १ २

औहोवा । भिरस्मयू१: ॥ १५ ॥ ४०

कश्यपऋषिः† । हे “इन्दो” सोम ! “मनीषिभिः” ऋत्विग्भिः‡ “मृज्यमानः” शोध्यमानस्त्वं “इषे” अस्माकमन्नाय¶ “धारया” “पवस्व” क्षर “रुचा” रोचमानेनान्धसा§ “गाः” पशून् “अभीहि” अभिगच्छ ॥ ९ ॥ ३९ ॥

असितऋषिः‖ । हे “सोम !” “वृषा” कामानां वर्षिता “देवयुः” देवकामः “अस्मयुः” अस्मत्कामश्च त्वं “अव्या” अवेः

---

* ऋ० ६, ७, २९, १ ।

† “मारीचः”-इति ऋषि-नैगेयः ।

‡ “मनीषिभिः”-इति मेधाविनामसु एकादशं नैघण्टुकम् ( ३, १५ ) । ‘मनसः एषक्षीणैः’-इति वि० ।

¶ “इषम्”-इति अन्ननामसु चतुर्दशं नैघण्टुकम् ( २, ७ ) ।

§ ‘रुचा दीप्त्या’-इति वि० ।

‖ “काश्यपो देवलो वा”-इति ऋषि-नैगेयः ।

अथैकादशी ।

३ १ २ १ १ १ ३ २उ ३क २र
अयासोमसुकृत्ययामहांत्सन्नभ्यवर्द्धथाः ।
२ १र २र
मन्द्रानइद्वृषायसे ॥ ११ ॥ ४१*

५,४ ३ ४ ५ २ १र
( अयासामीयम् ॥ ) अयाऽ३सोऽ३मसुकृत्यया । महा
७ ३ ५ १ २र १ २ २
न्त्सन्ना । भ्यवाऽ२र्द्धाऽ२३४थाः । मान्दानआयेऽ३त् । वृषाऽ३
४
याऽ५साऽ६५ऽ६इ ॥ १६ ॥ ४१

"वारेभिः" बलैः कृते दशापवित्रे "मन्द्राय" मदकरया धारया "पवस्व" चर ॥

"अव्यावारेभिः"-"अव्यीवारेषु"-इति पाठौ ॥ १० ॥ ४०

कविः ऋषिः† । हे "सोम !" "अया" अनया "सुकृत्यया" शोभनया अभिषवादि-लक्षणया क्रियया "महान्" पूज्यमानः "सन्" देवान् प्रति "अभ्यवर्द्धथाः" अभ्यवर्द्धयः । "मन्दानः इत्" मोदमानः एव "वृषायसे" वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायां उपरवेषु शब्दं करोषी-त्यर्थः ॥

"अभ्यवर्द्धथाः"-"अभ्यवर्त्तत" इति, "वृषायसे"-"वृषायते"-इति च पाठः ॥ ११ ॥ ४१

* ऋ० ७, १, ४, १ ।

† "भार्गवोऽयम्"-इति ऋषि-नैगेयः, "भारद्वाजः"-इति चतु० ।

अथ द्वादशी ।

३ १र २र　३१र २र　३ २ ३
अयंविचर्षणिर्हितःपवमानःसचेतति ।

३ २र　२र ३ २
हिन्वानआप्यंबृहत् ॥ १२ ॥ ४२*

२　३१ ४र　५
(आग्नेयम् ॥) आ । औहोवाहाइ । अयंविचा ।

१ १　२　३र ४र　५　र
षणाइर्हाइता । औहोहोवाहाइ । पवमानाः । स

१　२　३र ४र　५　र　२ ऽ
चाइतातो । औहोहोवाहाइ । हिन्वानआ । पियो३

२　४　५　४　५
हो३ । हवोवा । बृ५होइहाइ ॥ १७ ॥ ४२

जमदग्निः ऋषिः† । "विचर्षणिः" विद्रष्टा‡ "हितः" पात्रे निहितः "पवमानः" शोध्यमानः "अयं" सोमः "आप्यम्" अप्सु भवं "बृहत्" महत् अन्नं "हिन्वानः" प्रेरयन् "सचेतति"¶ सर्वैः सञ्ज्ञायते ॥ १२ ॥ ४२

---

* ऋ० ७, १, २५, ५ ।

† "भार्गवः"-इति ऋषि नैर्णयः ।

‡ "विचर्षणिः"-इति पश्यति-कर्मसु षष्ठ नैघण्टुकम् (३, ११) । चर्षणि शब्दव्याख्यानावसरे यास्कः "चायिता"-इत्याह (५,२४) । 'विचर्षणिः सर्वं पश्यति'-इति वि० ।

¶ 'सचेतति सम्यग्गामयति'-इति वि० ।

अथ चवोदशी।

१ २ ३ १२ २२ ३ १२ २२
प्रन*इन्दोमहेतुन†ऊर्म्मिन्नबिभ्रदर्षसि।
३ २ ३ २ ३ १ २
अभिदेवाँ अयास्यः॥ १३॥ ४३ ‡

३ ४५ २ २ २
(आयास्यम्॥) प्रनइन्दोए। चोए चो२३४या।
२१२ १ ५ १ २ १ १
महेतुनए २चोए २चो३या। ऊर्मिन्नबिभ्रदर्षसए २चोए
५ १ १ २ १ ३ ५२ २ २१२
२चो३या। अभाये३। दा३इवा२३४ औहोवा। अया
२ ३ १ १ १ १
सिया२३४५ः॥ १८॥

३ ४ ५ २ ३ २ ५
(आयास्यमुत्तरम्॥) प्रनइन्दो। इया३४३इ३४या।
२१२ ५ २ २ १ ५ २
महेतुनइया २इ३या। ऊर्मिन्नबिभ्रदर्षसइया २इ३या।
१ २ १ ३ ५२ २ २ २१२
अभाये३। दा२इवा२२४औहोवा। ए३। अया-
२ ३ १ १ १ १
सिया२३४५ः॥ १९॥ ४३

* "प्रण"-इति
† "महेतन"-इति च } — ऋ० ।
‡ ऋ० ७, १, १, १

अथ चतुर्दशी ।

१ २३ ३ २ ३ १ २

अपघ्नन्पवते मृधोप सोमो अरावणः ॥

३ १ २ ३ २

गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ४४*

॥ इति द्वितीय-दशतिः ॥

२ ३ ५ ४ ५

(भारद्वाजम् ॥) होइ२३४या । २ । इयाहाइ ।

१ १ २ १११ २ ३ ५ ४ ५

अपघ्ना२३न्पा३४५ । होइ२३४या । २ । इयाहाइ ।

२ १ ३ ५र र १ र ५र

वताइ । मा२ । धा२३४ । औहोवा । अपसोमा२

१ ५र १११ २ ३ ५ ४ ५

अरा२व्णा३४५ः । होइ२३४या । २ । इयाहाइ ।

अथास्य ऋषिः† । हे "इन्दो" क्रियमान‡ त्वं "नः" अस्माकं "महे" महते "तने"¶ धनाय "प्रार्षसि" प्रगच्छति । "न" संप्रत्यर्थे§ अयास्यश्चायमृषिः तव "ऊर्मि" तरङ्गं "बिभ्रद्" धारयन् देवान् यष्टुमभिगच्छति ॥ १२ ॥ ४३

---

* उ० २, ५, १, ७, १ = ऋ० ७, १, २२, ५ ।

† "आङ्गिरसः"-इति ऋषि-नैर्णयः ।

‡ "इन्दुरिन्द्रे क्रन्त्वर्षां"-इति (४, ४१). यास्कोक्तिकन्दनशब्दार्थएवेह गृह्यते । इन्दौ क्रन्दने (स्व० प०) ।

¶ "तना"-इति धननामसु पठ्यते (२, १० नै०) ऋग्वेदीयपाठोऽपि 'तने' इत्येव ।

§ "अथ निपाता उच्चावचेष्वर्थेषु"-(नि० १, २) इत्याद्युक्तेः ।

२ १ २ १२१ १ २ ३ ५ ४ ५
गच्छन्ता२३इन्द्रा२२३४५। होइ२३४या। २। इयाहाइ।
२ १ ३ ५र र ११११११
स्यनाइ:। का२। ता२३४। औहोवा। इ२३४५: ॥१०॥ ४४

अमहीयुः ऋषिः*। "सोमः" "मृधः"† हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अरावणः"‡ अदातॄन् धनानामदातॄन् च अपघ्नन् "इन्द्रस्य" "निष्कृतं"¶ स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १४॥ ४४

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः॥४॥

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

२ १ २ ३१ २ ३ १२ २र
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ ३ १२ २र ३ १ २ ३ २ १ ३ १ २ ३ १ २ ३ १ २
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः ॥१॥ ४५§

* "आङ्गिरसः"-इति ऋषि नैगेयः।

† 'मृधः सङ्ग्रामान् पाप्मनो वा'-इति वि०।

‡ 'अरावणः अव्रताभिः प्रस्तारः'-इति वि०।

¶ 'निष्कृतं संस्कृतम्'-इति वि०, परिष्कृतमित्यर्थः।

§ ७० १, १, ९, १=ऋ० ७, ५, १९, ४=आर० १, १, १९—ऊह० १, १, १—३;—१, २, १०;—२, १, १,—४, १, १—५—६;—६, १, २—१२—१३;—६, २, २—१३;—१०, १, १२—१३—२०;—११, २, १९;—१३, १, ७—१९;—१३, २, १५;—१५, २, ३—४; १६, १, १०—११—१६;—१८, १, ७—२०—२१;—१९, १, २०;—२०, २, ११—१५—१६—१७;—२२, १, ६=ऊह्य १, २, १०;—३, १, ९—२०,—४, १, ५;—४, २, ४—१५,—५, १, १४;—५, २, ८;—६, १, ७।

(आयास्यम्॥) पुनानःसो। मा२धा२३४औहोवा। रा२३४या। अपोवसानोअर्षसि। आरत्नाऽधाः। योनाइमा२त्तो३। स्या२मा२३४औहोवा। दा२३४सी। उत्सोदि३वो३। हा२इरा२३४औहोवा। एया२३४याः। ॥ २१ ॥

(मांडवम्॥) इया२ई३या। पुनानःसो२। मधा रा२३४या। अपोवसानो अर्षो२३सी। आरत्नधायोनि मृतस्यसीदा२३सो। उत्सोदिवो२३। हा२इरा२३४औ होवा। एया३या२३४५ः॥ २२॥

(आपदासम्॥) पुनानःसोमधारया। अपोव सानो अर्ष। स्योऽ३हा। ओ३हा। आरत्नधायोनिमृतस्य सीद। स्योऽ३हा। ओ३हा। उत्सोदा२इवा२ः। ओ ३हा। ओ३हा। हिरण्या२३या३४३ः। ओ२३४५इ। डा॥ २३॥

(सोमसाम ॥) पुनानःसो५मधारया । आपो २वासा
२ । नो अर्षसी । आ । २त्नधा २ः । योनिमृता २ ।
स्यसीदसी । उत्सो २देइवा २ः । हिरण्या २३या ३४३ः ।
ओ २३४५इ । डा ॥ २४ ॥

(ऐडमायास्यम् ॥) आइपुना । नाःसो । मधा
रया । आपोवसा ३१ । नो अर्षसी । आरत्न धा ३१ः ।
योनिमृता । स्यसीदसी । उत्सो देवा ३१ः । हिरण्या
२३या ३४३ः । ओ २३४५इ । डा ॥ २५ ॥

(भाण्डवम् ॥) पुनानःसोमधारया । पोवसोवा ।
नो अर्षसि । आरत्न । धाउवा २३ । होवा ३हाइ । योनि
मृतस्यसीदसि । उत्सो देि । वाउवा २३ । होवा ३हाइ ।
हिरण्या २३या ३४३ । ओ १३४५इ । डा ॥ २६ ॥

(उद्वत्प्राजापत्यम् ॥) पुनानःसोमधा । हो५रया ।
अपोवसानआचो २ । षासी २ । आरत्नधायोनिमृतस्यसा

२ १ ५ २ ९ २ ९ १
औ३हो३। दा२३४मी। उत्सौ औ३हो। दाइवोर्। ३२ २ १ १११११
हिरा३४५। ण्या३या२३४५ः॥ ३०॥

५ र र र र र र र
(सदोविशीयम॥) पुनानःसोमधारयाऔहोऔहो३इ।
५ र र र ५ १ १र २र र १ २ ऽ २ ऽ २
औहोऔहोईवा। अपोवसानोअर्ष। स्यो३हा। औ३हा
२ ऽ २ ऽ २ २ १र २१र र २ १ २ र
३इ। औ३होइ। औ३हो३वा। आरत्नधायोनिमृतस्यसीद।
ऽ २ ऽ २ २ ऽ २ ऽ २ २
स्यो३हा। औ३हा३इ। औ३होइ। औ३हो३वा।
१ २ ऽ २ २ ऽ २
उत्सोदा१इवा२ः। औ३हा। औ३हो३इ। औ३होइ।
ऽ २ २ १ १ ५र र १र
औ३हो३वा। हिर। ण्या२या२३४औहोवा। सदो
१ ३ ११११
विशा२३४५ः॥ ३१॥

(स्ववासिनी द्वे॥) औ२हो१। वाऔवा। २।
२ १ २ ५र र २र
औ२हो१। वाऔवा३। औ२वा२३४औहोवा। पुना
१२र १र २र १र २र र १र २१र र
नःसोमधारया। पोवसानोअर्षसि। आरत्नधायोनि
२१२र १२र र १ २
मृतस्यसीदसिउत्सोदेवाः। औ२हो१। वाऔवा। २।

२ १ ३ ५र र २
ओ२होइ। वाओवा३। ओ२वा२३४औहोवा। ए३।
र १ ११११
हिरण्ययु२३४४ः॥ ३२॥

१ ३ २ १ ३ ५र र
ओ३। हो१। वाओवा३। ओ२वा२३४औहोवा।
१र १ १र १र १र १र २र र १र १ १र र
पुनानःसोमधारया। पावसानोअर्षसि। आरत्नधायो
२ १ २ र २ २ १ ३
निमृतस्यसीद। स्यो३। हो१। वाओवा३। ओ२वा
५र र १ २र र१र र १ २
२३४औहोवा। उत्सोदेवोहिरण्ययः। इडा२३भा३४३।
१
ओ२३४५इ। डा॥ ३३॥

२ २ र र
(प्लुवः॥) हा। वा३हा३। वो३हा। हा। ओ२३४वा।
२ ३ ५ २ ३ ५ २ ३
हाइ। पुनाना२३४ःसो। माधारा२३४या। आपावा
५ २ ५ २ ३ ५ २
२३४सा। नोअर्षा२३४सी। आरत्ना२३४धाः। योनी
३ ५ २ ३ ५ २ ३ ५ २
मा२३४र्त्ता। स्यासीदा२३४सी। ऊत्सोदा२३४इवो। हाइ
२ ५ २ २ २ ५
रण्या२३४याः। हा। वो३हा। वो३हा३। हा।
१ ५ २ ५र र १ १ २ १ २र
ओ२३४वा। हो३४। औहोवा। ए३। अतिविश्वानि
१र २ र३ १११
दुरितातरेमा२३४॥ ३४॥

(रौरवम् ॥) पुनानःसोमा३धारा२३४या। आपो वसानोअर्षस्यारत्नधायोनिमृतस्यसा२इदसाइ। —ओवा३ उवा। उत्सोदेवोहिरा२३ण्याइ। ओ३हा२उवा। एयया। औ३होवा। हो५इ। डा॥ २५॥

(यौधाजयम् ॥ पुना२१। नाइःसो। म। धारा २३४या। आपो३। वसा२। नआ३४५। षा२३४सी। आरत्नधाः। यो। निमृता२। स्यसा३४५इ। दा२३४सी। उत्सा२ः। दाइवो२। हिरा३४५ण्या२३४याः॥ २६॥ ४५

॥ इति चतुर्दशस्याद्ध: प्रपाठकः॥

भरद्वाजाद्यः सप्त ऋषयः। हे "सोम!" "पुनानः" शोधकः "अपः" वसतीवरीः† "वसानः" आच्छादयन् "धारया" "अर्षसि" गच्छसि द्रोणकलशे किञ्च "रत्नधा" रमणीयानां धनानां दाता‡ त्वम् "ऋतस्य" यज्ञस्य "योनिं" स्थानम् "आसीदसि"

---

* "सर्वासां सप्त ऋषयोभरद्वाजः काश्यपोगोतमोऽत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठ इत्येते"-इति ऋषि-क्रमः। सर्वासामेकादशानां द्वादशानामित्यर्थः।

† "आपः उदकानि"-इति वि०।

‡ 'रत्नानां धारयन्'-इति वि०।

अथ द्वितीया ।

२ ३ १ २ ३ २उ १ १ २ १ २ १ २
परितोषिञ्चतासुतᳪसोमोयउत्तमᳪहविः ।
२ ३र २र ३ २ ३ २उ ३ २ ३ २ ३ १ २
दधन्वांय्योनर्योअप्स्वा३न्तरा*सुषावसोममद्रिभिः ॥ ; ॥४६†

( अच्छिद्रम् ॥ ) परीतोषी । चता३१उवा२३ । स्वा२३४ताम् । सोमो२यउत्तमᳪहवो: । सोमोयज । तेमा३१उवा२३ । व्वा२३४वो: । दधन्वाᳪयोनर्यो२प्सुवन्तरा । दधन्वाᳪया: । नर्यो२ । आ । प्सवा३१उवा२३ । ता२३४रा: । सुषावसोममद्रिभो२३४: । सुषावसो । ममा३१उवा२३ । द्रा२३४इभो: ॥ १ ॥

अपि च "देवः" द्योतमानः सोमः "उत्तमः" प्रस्यन्दनशीलः सन् "हिरण्ययः"‡ देवानां हिततमणीयो¶ भवसि खलु ॥

"देवो"-"देव"-इति साम्नैरेच: पाठौ ॥ १ ॥ ४५

---

* "स्वं १तरा"-इति च० स्वरपाठः ।

† उ० ५, ४, १२, १=ऋ० ७, ५, १२, १=अंचे १, ३, १,—२—३—४—५—६, —७, १, २—४;—७, २, ३—४;—८, १, ३;—८, २, ४,—८, १, ७—११;—१२, १, १८;—१२, २, २०;—१५, १, ६;—१५, २, १२—१३—१४;—१६, १, ५—६;—१८, १, १८—ऊह्ये १, १, २—३—४—५—६—७—१२;—२, २, ६—१० ।

‡ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ( पा० ६, ४, १७५ ) ।

¶ "हिरण्ययः अमततमः"-इति वि० ।

(रयिष्ठम् ॥) परीतोषी। चताश्च३ताम्। औ३होइवा। औ३होऽवा। ई३या। ई३या३४। हा। हाउवा। सामोऽरयउत्तम९्हवोः। सोमोयज। तमा९्हा३वीः। औ३हो३वा। औ३हो३वा। ई३या। ई३या३४। हा। हाउवा। दधन्वा९्योनर्यो९्प्सुवन्तरा। दधन्वा९्याः। नर्यो२। आ। प्सु३आन्ता३रा। औ३हो३वा। औ३हो३वा। ई३या३४। हा। हाउवा। सुषावसोममद्रिभी२३४ः। सुषावसो। ममाद्री३भाइ। औ३हो३वा। औ३हो३वा। ई३या। ई३या३४। हा। हाउवा३। ऊ३२३४पा॥ २ ॥

(भारद्वाजे द्वे ॥) औहोइपरीतोषी। चतासुतम्। औ३होइ। औहोइ। आ३। औहो३वा। सोमोऽरयउत्तम९्हविः। औ३होइ। औहोइ। आ३। औहो३वा। दधन्वा९्योनर्यो९्प्सुवन्तरा। औ३होइ। औ-

२ ऽ १र २ १र र २ ऽ
हाइ। आ३। औहा३वा। सुषावसोमद्रिभिः। औ
२ ३र २ १ ५ ५
३होइ। औहोइ। आ२३४। उऊवा६हाउ। वा॥ ३॥
४ ५ २र १ ऽर १
प। यैपारी। तापिञ्चतारसुतम्। आउवा२३।
२र ३ २र १ ऽ २ १र ऽर १ २ १ २ १
हाउहाउ। हो३वा। सोमो२यउत्तमꣳहविः। आ
२र ३ २र ३ ऽ २ १र र ऽर
उवा२३। हाउहाउ। हो३वा। दधन्वाꣳयोनर्यो२
१ २ १ २र ३ १र ऽ २ १र
प्सुवन्तराउ। वा२३। हाउहाउ। हो३वा। सुषावा
२ २र १ २र १ ऽ १ ३ २ १
२३मा३। हाउहाउ। हो३वा। मम। द्रा२३४इभा
५ ५
इ। उऊवा६हाउ। वा॥ ४॥
५ र र र १र
(आभीशवम्॥) परितोषिञ्चतासुतम्। ए। सो
र १ ७ २ ५ २ १र र
मोयऊ३त्तामꣳहाविः। दा२३४धा। हाइ। न्वाꣳयो
र ७ २ २ ५ २ १ र २ १
नर्योअप्सुअन्तारा। हुर२३४पा। हाइ। वासोममोर
५ ४
३४वा। द्रा५इभोइहाइ॥ ५॥
५ र र र
(उत्तरमाभीशवम्॥) परीतोषिञ्चतासुतम्। ए।

२र र १ ७ २ २ ५ २ २
ए। सोमोयऊ३त्तमᳪहाविः। दार३४धा। हा३हाइ।
१र र१ र ७ २ २ ५ २ २ १
न्वाᳪयोनर्यो अप्सुअन्तारा। ष्ठर३४षा। हा३हा३। वा
र २१ ५ ४ ५
सोममी२३४वा। द्रा५इभोई३हाइ॥ ६॥

४ ५र ४र ५ र ४ १र
(माण्डवम्॥) परीतोषिञ्चतासुतम्। इहा। सो
र २१ २ १२ १र र र २
मोयउत्तमᳪहा२३वीः। इहा। दधन्वाᳪयोनर्यो अप्सु
१ २ १२ १र २ १२ १
वन्ता२३रा। इहा। सुषावा२३सो। इहा। ममा२३।
१ २ ५र र २ ५
द्रा२इभा२३४औहोवा। ई२३४हा॥ ७॥

४ ५र ४र ५ र ५
(माण्डवमुत्तरम्॥) इहा। परीतोषिञ्चतासुतम्।
१र र २ १ २ १२ २
इहा। सोमायउत्तमᳪहा२३वोः। इहाउवा३। ऊ३-
५ २ १र र र २ १ २ १२
४पा। दधन्वाᳪयोनर्यो अप्सुवन्ता२३रा। इहाउवा३।
२ ५ २१र २ १ २ २ ५
ऊ३४पा। सुषावा२३सो। इहाहाउवा३। ऊ३४पा।
२१ २ १२ २ ५
ममद्रा२३इभोः। इहाउवा३। ऊ३२३४पा॥ ८॥

४ ५र ४र ५ र ४ १र १र
(अभीवासः साम॥) परीतोषिञ्चतासुताम्। सोमो

यउ। तम७ह्वाइः। दंधाश्रो२३४वा। ऊ२३४पा। न्वा७ योनर्यो अप्सु वन्ता२३रा। सुषावा२३सो। मामद्रिभिः। इडा२३भा३४३। श्रो२३४५इ। डा॥ ८॥

(परिवासःसाम॥) परीतोषिञ्चतासुतम्। श्रो६वा। सोमो२यउत्तम७हविः। दधान्वा७यो३। हा३हाइ। नर्यो२प्सु वन्तरा। सुषावामो३। ह३हा। मामद्रिभिः। इडा२३भा३४३। श्रो२३४५इ। डा॥ १०॥

(वैणवम्॥) परीतोषिञ्च। ता५सुताम्। सोमो यउत्तामा २१२म्। हावी२ः। दधन्वा७योनर्यो अप्सु बा२१२। तारा२। सुषावा२३सो३। ममे२३४वा। द्रा५इभो६हाइ॥ ११॥

(सौमक्रतवीयम्॥) परीतोषा२इ। चतासुता२म्। ऐहो२। ऐहो२। ऐहिहा२इ। उवा२इ। ई३या।

सामायज्ञा२। नमऽच्चवो२ः। ऐहो२। ऐहो२। ऐहिहो२इ। उवा२इ। ई३या। दधन्वाऽयोनुर्यो२। प्रसुवन्तरा२। ऐहो२। ऐहो२। ऐहिहा२इ। उवा२इ। ई३या। सुषावसो२। ममद्रिभा२इ। ऐहो२। ऐहो२। ऐहिहा२इ। उवा२इ। ई३या३४३। ओ२३४५इ। डा॥ १२॥

(गर्ह्यः॥) उपाउप। उपा३१। उपाउप। परीतोषिञ्चतासुतम्। उपाउप। उपा३१। उपाउप। सोमोयउत्तमऽहविः। उपाउप। उपा३१। उपाउप। दधन्वाऽयोनर्या३प्सुवन्तरा। उपाउप। उपा३१। उपाउप। सुषावसोममद्रिभिः। उपाउप। उपा३१। उपा३ऊ५पा६५६। ऊ२३४पा॥ १३॥

(प्रतोदः॥) हाउहाउहाउवा। परीतोषिञ्चतासुतम। उपा२३४५। हाउहाउहाउवा। परीतोषिञ्च

तास्तुतम् । इहा । उपा२३४५ । हाउहाउहाउवा ।
परीतोषिञ्चतासुतम् । अवोबृहत् । उपा२३४५ । हाउ-
हाउहाउवा । परीतोषिञ्चतासुतम् । सोमोरयउत्त-
मꣳहविः । दधन्वाꣳयोनर्योरप्सुवन्तरा । सुषावसोर-
३४५ । हाउहाउहाउवा । ए३ । मंमद्रिभीर२३४५ः ॥१४॥

(महायौधाजयम् ॥) हाओ२३४वा२ । हाइआ-
२३४वी । हाउवा । परीतोषिञ्चतासुतम् । सोमोरय-
उत्तमꣳहविः । दधन्वाꣳयोनर्योरप्सुवन्तरा । सुषाव-
सोममा । हाओ२३४वा । २ । हाइओ२३४वा । हाउवा३ ।
द्राइद्रीभीर२३४५ः ॥ १५ ॥

हे ऋत्विजः ! "सुतम्" अभिषुतं "सोमं" "इतः" अस्मात् कर्मणः "ऊर्ध्वम्" अथवा अस्मात् प्रदेशादूर्ध्वं "परिषिञ्चत" वसतीवरीभिः । ["इतोषिञ्चत" इत्यत्र संहितायां छान्दसं रोरुत्वम् । आदेशप्रत्यययोरिति षत्वम्] "यत्र" सोमः देवानाम् "उत्तमं" प्रशस्तं "हविः" भवति । अपिच "नर्यः"

अथ तृतीया।

१ २ ३ १२ ३१ ३ १२ ३१ ३ १ २
आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया।

३ २ ३ २ ३ क २ ३ १ २ ३ ३ १ २
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ३ ॥ ४७*

२ ५ २ ३ २ ३ १ २
(आग्नम॥) आ२३४सो। मस्वानो३आ। द्राइभा

३ ५ १ २ ३ २ ३ ३ १ १ २ २
ओ२३४वा। तिरोवारा२णिअव्यया२३। जानाओ२३४

५ १ २ २ ५ १ ३ ३ ३ १
वा। नापाओ२३४वा। रिचमुवोवो२र्विशद्धरी२३ः।

१ २ ३ ५ १ २ २ ५ ४
सादाओ२३४वा। वानाओ२३४वा। षुदा५ध्रिषाइ।

४
दो५इ। डा॥ १६॥

५ २ २ २ २ ३ ५
(सोमसाम॥) हावासोमस्वा। नोअद्रा२३४इभीः।

२ ३ ५ २ ५ २
तिरोवा२३४रां। णिया३१उवा२३। षा२३४या। जनो

मनुष्याय हितः "यः" च सोमः "अप्सु" वसतीवरीषु "अन्तर्" परिचे धान्तर् "दधन्वान्" गच्छन् भवति। तं सोमम् "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार तं परिषिञ्चतेति समन्वयः॥ २ ॥ ४६

---

* ऋ० ८, ७, १०, १=ऋ० ७; ५, ११, ५=कल्प ४, १, ६।

नार२३४पू। राइचामू२३४वो:। विशा३१उवा२३। चा-
२३४रौः। सदोवार२३४ने। षुदा३१उवा२३। घोर३४
षे॥ १७॥

आसोमस्वानोअद्रिभाइः। तिरोवाराणिअव्या१या
२। जनोनपुरिचाम१वोरः। विशाद्धा१रीरः। सदाव-
नाइ। षूरदध्रिषेर२३४५इ। डा॥ १८॥

आसोमस्वानोअद्रिभिः। तिरोवा३राणिअव्यया।
जनोनपुरिचमुवोविंशद्धरिः। औ२। ऊवाइ। होइवा।
सदोवनेषुदौ२। ऊवाइ। होइवा। धिषा। औ-
३होवा। होपुइ। डा॥ १९॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमा-
णस्त्वम् "अव्यया"* अविमयानि "वाराणि" वालानि पवि-
त्राणि "तिरस्" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ पवसे"
आभिमुख्येन क्षरसि। "हरिः" हरितवर्णः स सोमः चम्वो-

* इयाडियाजीकाराणामुपसंख्यानमिति कात्यायनवचनात् सिद्धम् (७,१,३९सू०)।

अथ चतुर्थी।

प्रसोमदेववीतये सिन्धुर्न पिप्ये अर्णसा।
अंशोः पयसा मदिरो न जागृविरच्छाकोशं मधुश्चुतं ॥४॥४८*

(त्रैणिधनमाग्नेयम्॥) प्रसोमदा। वावोता२३४याइ।
सिन्धूर्नापाइप्यआ३१उवा२३। णा२३४सा। आंशोः-
पा२३४या। सामदाइरानजा३१उवा२३। गृ२३४वीः।
आच्छाको२३४शाम्। मधा३१उवा२३। श्च२३४ताम्॥२०॥

(अग्नेर्वैश्वानरस्य साम॥) प्रसोमदेववो। तयो२३४-
वाइ। सिन्धुर्नपिप्येअ। णसो२३४वाइ। आंशाओर-
धिषवणफलकयोरुपरि 'स्थिते कलशे†' "विशत्" प्रविशति।
तत्र दृष्टान्तः—"जनीन" यथा जनः "पुरि" पुरे प्रविशति।
स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु‡ "सदः" स्थानं "दधिषे"
"दधिषे"-इति, साम्न ऋचः पाठौ॥३॥४७

---

* उ० १, २, २०, १=आ० ७, ५, १४, २=आर० ९, २, १५—१६=ऊहे १, २, १३ ५—६, ९, १३ ;—८, १, १२ ;—९, २, १७—१८ ;—११, १, १७ ;—१४, २, १४ ;—१८, १, १२—१३—१४ ; —१९, २, १७ ;—२२, १,६=ऊह्य ६, १, ५।

† 'आनडुहचर्मणि'-इति वि०।

‡ 'वनेषु उदकेषु' इति वि०।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ १ २ ३ २ १ १ २

सोमउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

१र १ १ १ १ २ ४ ५ २

इ। प्येअर्षसा२। इहा३। आ॒श्शो३ःपाया। हा-

३ ५ २ १ २ २ १ १ १ २

होर२३४हा। सामदिरो। नजागृ२३वीः। इहा३।

१ २ ४ ५ २ ३ ५ ३ २ ४

आच्छा३काशाम्। हाहोर२३४हा। मधूश्चुतार्९५-

२ १ १ १ १

६म्। हेर२३४५॥ २४॥

हे "सोम!" त्वं "देववीतये" देवानां पानाय* तदर्थम् "अर्षसा" वसतीवर्याख्येनोदकेन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुरुदकेन प्रप्यायते तद्वत्† [प्यायतेः लिटि लिटाड्कोश्चेति पीभावः] ततः स त्वं "मदिरः" मदकरः सुरादिरिव "जागृविः" जागरणशीलः‡ [यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागरणशीलस्त्वं "अंशोः" लता-खण्डस्य "पयसा" रसेन "मधुश्चुतं" मधुररसस्य क्षारयितारं "कोशं" द्रोणकलशं "अच्छ" अभि¶ गच्छसि॥ ४॥ ४८

---

* 'देववीतये देवतर्पणाय'-इति वि०।

† 'प्रपीप्ये प्रवर्द्धते पूर्यते वा'-इति वि०।

‡ 'जागृविः जागरणशीलः अप्रमत्तः'-इति वि०।

¶ 'अच्छ आप्नुमं'-इति वि०।

अश्वये*वद्धरितायातिधारयामन्द्रयायातिधारया ॥५॥४९†

(सोमसामानि षट् ॥) हाउसोमा । उष्वाणा३ सो
ट१भोर । आधिष्णुभिरवीरनाम् आश्वा३हो । येवद्धरि-
तायाताइधा१राया२ । मन्द्राया३या३४ । हाश्रावा ।
तिधारया१२४५ ॥ २५ ॥

सोमऊ३ष्वाणःसोटभाइः । आधिष्णुभिरवोनाम् ।
आश्वये२३४वा । हरितायातिधा१रा३या । मन्द्राया
२३४या । ता२३४इधा । रया । औ३होवा । हा५इ ।
डा ॥ २६ ॥

सोमउष्वाणःसोटभिः । ए५ । अधी । ष्णुभिरा३१-
उवा२३ । वो२३४नाम् । आ२३श्व । येवद्धरितायातिधा-
३१उवा२३ । रा२३४या । मा२३द्रा । यायातिधा३१उवा-
२३ । रा२३४या ॥ २७ ॥

---

* 'अश्वया इव = अश्वेन यथा शीघ्रं गच्छति, तद्वत् शीघ्रगामिन्या'-इति वि० ।

† उ० ३, २, १२, १ = क्र० ७, ५, १२, ३ = ज्ये ३, ६, ५ — ६ — ७ — ८ ;—
२०, १, १९ — २० ;— २०, २, १ — ऊह्ये ६, १, १ — ३ — १० ;— ६, २, ६ ।

सोमउष्वाणःसोतृभिः। एपु। अधो। ष्णुभिरवीर। नाम्।
आश्वयेव। हारितायार। ताइधारया। मान्द्रयायौवा।
तोर३४धा। रया। औ३होवा। हो५इ। डा॥ २८॥

सोमउष्वाणःसो तृ। भाइ। अधिष्णुभिरवी। नाम्।
आधिष्णुभिरवीर। नाम्। अश्वयेवा। हरितायाता
र३इधा। रया३१उवा२३। मा२३४०द्रा। यायाती
र३४धा। रयाऔहोवा। हो५इ। डा॥ २९॥

सोमउष्वाणःसोतृभिः। औ२होइ। आ२३४।
धिष्णुभिरवीनाम्। आश्वयेवहरिताया। तिधारायौ।
वाऔ२३४वा। मन्द्रयायातो३धा। ऊ३म् ऊ३४३म्।
रा३४५योइहाइ॥ ३०॥ ४९

॥ इति ग्रामे गेये चतुर्थः प्रपाठकः॥

"सोतृभिः" पुरुषैः "स्वानः" सुवानोऽभिषूयमाणः "सोमः" "अवीनां स्नुभिः" [मांसपृत्सूनामुपसंख्यानमिति वार्त्तिकेण सानुशब्दस्य स्नुभावः] समुच्छ्रितैर्वालैः पवित्रैरधियाति अधि

अथ षष्ठी।

३ १ २ ३ १ २ ३ १ २

त्वाह्य॑सोमरारण*सख्यइन्द्रो दिविदिवे।

३ १ २ ३ १ २ ३ १र २र ३ २उ ३ १ २

पुरूणि॑बभ्रोनिचरन्तिमामवपरिधी॑रतिता॑इहि॥२॥५॥

५ र २ १

( वैष्णवम् ॥ ) श्रो ॥ तवाह्य॑सो। मरा २रणा।

र १ र र र

रणा। सख्यइन्दोदिवा २ई। दिवाइ। दिवे। पुरूणिबभ्रो-

१ र १

निचरन्तिमा २मवा। अव। परिधी॑रतिता॑ २इहा२३इ।

१ ३ ५र र २ ५

आ२इ। हा२३४। औहोवा।। ऊ२३४पा॥ १॥

४५र ४ २ १ र

( द्वितीयंवैष्णवम् ॥ ) तवा। तवा। अह्य॑सोम-

अधिकं गच्छन्ति। "उ" इति प्रसिद्धौ। "अश्वयेव" वडवयेव हरितवर्णया धारया याति। "मन्द्रया" मदकारिण्या धारया द्रोणकलशमधि गच्छति॥ "उष्वाणः" "उपवीणः"—इति पाठौ॥ ५॥ ४९

---

* 'रारण रमयाम्यि। अथवा रणतिसुतिकर्मा तव स्तुतिं कुर्मः'-इति वि०।

/ 'पुरूणि बहूनि दुःकृतानि। अथवा बहूनि यजमानकुलानि चरन्ति'-इति वि०।

‡ उ० ३, १, ११,१ = ऋ० ७, ५, १५, ४ = ऊह्ये २, १, ९—१०—११;—९, १, १०;—१३, २, १—२, —१६, २, १५-१६—१७—१८, —१९, २, १;—२०, १, १४—१५—१६ = ऊह्ये २, १, १३,—१, २, ८, —४, २, १२;—६, १, ११—१६।

¶ 'मन्द्रया बहुलया' इति वि०।

राारए। सख्याई३०दो। दिवाऔ३वो। दाइवे२। पुरूणिबभ्रो ानिचरन्तिमां१मा३वा। पराऔ३वो। धाइ९रतितोर२३४वा। आ५इहोइहाइ॥ २॥

(आङ्गिरसानिचोणि॥) तवाह९सोमा६रारणा। साख्याई२३४०दा। दिवेदा२३४इवे। पुरूणिबभ्रोानचरन्तिमाम्। आवा२३४हाइ। पारीधाइ९रा। तिता२३४वा। आ५इहो६हाइ॥ ३॥

तवाह९सोमरी। हो५रणा। साख्यइन्दो२। दिवा४४५इ। दी२३४वे। पूरु२णाइबा२। भ्रोनिचरा२। तिमा३४५म्। आ२३४वा। पारी२धाइ९रा२। तिता९३४५। ई२३४हो॥ ४॥

तवाह९सोमरारण। सख्यइन्दोदिवेदिवाइ। सख्यइन्दोदिवेदा२३४वे। पुरूणिबभ्रोनिचरन्तिमामा२३वा।

अथ सप्तमी ।

१ १ २　　　　　　　　　३ १२ ३१२

मृज्यमानः सुहस्त्या * समुद्रे वाचमिन्वसि ।

३ २ ३ १ २ ३ १ २ ३ १ ३ १ २　　३क २र

रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥ ७ ॥ ५१ †

१　　२　　१　　२

पराइधार३इ(१)रा। तिता(१)२३इषा३४३इ॥ ओ२३४५।

इ। डा ॥ ५ ॥

५ र २

( स्वारमौक्षणोरन्ध्रम ॥)　मृज्यमानाः। सुहस्ति-

हे "इन्दो" सोम! तव "सख्ये" सखिकर्मणि अहं "दिवे दिवे" अन्वहं "रारण" रमे [रणतेर्लिटि उत्तमे णलि रूपम् हे] "बभ्रो" बभ्रुवर्ण! सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "न्यवचरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" ‡ रक्षसान् त्वम् "अतीहि" आगच्छ ॥ ६ ॥ ५०

---

* "सुहस्त्य"-इति ऋ० स०।

† उ० ४, १, १२, १ = ऋ० ७, ५, १६, १ = आर० ५; १, १२ = ऊह्य ३, २, १—२—४—५; —८, १, ४—६; —२०, २, ७—८; —ऊह्य ६, १, १९ ।

‡ 'परिधीन् अतीहि'-ये अन्ये यजमानाः परिचरन्ति, तेभ्यः परिधीन् स्तरणान् अतीत्य इहि मदीयं यज्ञमायाहि। अथवा दुःखानि ये कुर्वन्ति अतीत्य तेषां परिधीन् आयाहि'-इति वि०।

१ २ ३ ४ ५ ५ १ २ ४
याऽ। सामुद्राइवा। चमिन्वमाऽइ। रायो२०पाइ-
५ ३ १ ३ ५ १ २र
शा। गम्बङ्गलाऽम्। पूरुस्पृ२३४हाम्। पवमा।
१ २ २ १ ५ ४ ५
ना। औ३हो। भिये२३४वा। पा५सोइहाइ॥ ६॥

५ र २ १
(औक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्त्याया२।
१ २र र १ ३ १ १.१ ३ २ १
समुद्रेवा। चामिन्वामा२३४इ। रया३४इंपिशा। गम्ब
३ १ १ ३ ५र र
ङ्गलंपूरुस्पृहा२म्। पवा२३। मा२ना२३४औहोवा।
१ ५र ३ १११
भियार्षसी२३४५॥ ७॥

५ र २
मृज्यमानाः। सुह। स्तिया। सा१मू२द्राइवा२।
१ २ १ १ २ १ २
चमि। न्वसाइ। रा१यी२०पाइशा२। गंवङ्गलंपुरु।
१ २ १ १ ३ ५र र
स्पृहाम्। पा१वा२माना२३। भा२या२३४औहोवा।
५
पा२३४सी॥ ८॥

५ ५ १र
(आग्नेयानित्रीणि॥) मृज्याइ२। मानःसुहस्तिये।
२ २ १र र २ २ १
औ३हो। समुद्रेवाचमिन्वसाऔ३हो। रयिंपिशङ्गं बहु

२ २ १ २ २ १ ५
संपुरुस्पृहाओ३हो। पवमा२३ना३। भियो२३४वा।
४ ५ ५
षा५सो६हाइ॥ ८॥

५ ४ ५र ४ ५ ६
मृज्यमानः सुहस्तया। वाह्लाइ। समद्राइवा।
७ ६ ५ ३ २ २ २ १ २ १ ०
चमोरन्वा२३४सो। रया३४३ पिशा। गंबह्लन। पुरु-
२ २ १र २ २ १ ५ ४
स्पृहा२३४म। पवा३४माना३। भिया२३४वा। पा
५
५सो६हाइ॥ १०॥

४ र ४ १ १ १
मृज्यमाना५ःसुहस्तिया। समु२द्राइंवा२। चमा
१ २ २ १
२इन्वासी२। रयिंपिशङ्ग बह्लंपुरुस्पृहाओ३हो। पव
२ २ १ ५ ४ ५
मा२३ना३। भियो२३४वा। षा५सो६हाइ॥ ११॥

५ ४५र र
(ऐडमौक्षणोरन्ध्यम॥) मृज्यमानःसुहस्त्या। समु
र ४ ५ १ १ १ ७ २ २ २
द्रेवावा। चामिन्वसिं। राय्यिंपिशा३। हा३हा।
१ २१ २ १ २ १ र १ २ २ १
गंबह्लंपुरुस्पृहमः। पवमाना३। हा३हा। भियर्षा
२ १
२३मा३४३इ। ओ२३४५इ। डा॥ १२॥

अथाष्टमी।

अग्निसोमामसआयवःपवन्तिमवम्मदम ।

( वाजजित् ॥ ) मृज्यमानःमु ह्वा। स्तिया २। समू २ह्वा। द्रवा २ह्वो। चामिन्वमाइ। रया २यिं
ह्वाइ। पिशा २ह्वा। गंबहुलाम। पुरुस्पृहाम। पवा २ह्वा। माना २ह्वा। भौयर्षमा३१उवा२३। वा
जीजिगी३वा९१॥ १२॥

हे "सुहस्त्या" हस्ते भवा हस्त्याः अङ्गुलयः,* शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानस्त्वं "समुद्रे" अन्तरिक्षे† कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि‡। किञ्च। हे पवमान पूयमान सोम! "पिशङ्गं" हिरण्य रजतादिभिः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनं "अभ्यर्षसि" स्तोतृणामभिक्षरसि प्रयच्छसीत्यर्थः॥ ७॥ ५१

* "सुपांसु (७, १, ३९)"-इत्यादिना सुप आले रूपम्।

† "समुद्रः"-इति अन्तरिक्षनामसु पञ्चदशं नैघण्टुकम् (१, ३)।

‡ "इन्वति"-इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् (२, १४), व्याप्तिकर्मसु च प्रथमम् (२, १८)। अतएव 'इन्वसि व्याप्नोषि' इति वि०।

३ १२ २२ ३१२ ३ १ २
समुद्रस्याधिविष्टपे मनीषिणो

३ १ २ ३ १ २
मत्सरासो मदच्युतः ॥८॥ ५२*

२ २ २ २ ३१ २
( वैश्वदेवे ) । हाउहाइ । अभिसोमासआया-

२ २ २ १ २
१वा२३: । हाउहाइ । पवन्तेमदी३यांमा१दा२३म् ।

१ २ २ २ १ २
हाउहाइ । समुद्रस्याधिविष्टपेमा३नाइषा१इणा२३: ।

२ २ २ १ २ २ २
हाउहाइ । मत्सरासोमा३दाच्यु१ता२३: । हाउहा-

१
३४३इ । ओ२३४५इ । डा ॥ १४॥

४ ५ ४ ५ २ ५ ४ ५
आभीसोमा । सआ३१उवा२३ । या२३४वाः । पाव

४ ५ २ ५ ४ ५ ४
न्ताइमा । दिया३१उवा२३ । मा२३४दाम् । सामुद्र-

५ २ १ २ १ २ ५ ४ ५
स्या । धिविष्टापेमना३१उवाये३ । षी२३४णाः । मात्सा

४ ५ २ ५
रासाः । मदा३१उवा२३ । च्यु२३४ताः ॥ १५॥

---

[१] उ० ३, २, ९, १ = आ० ७, ५, १४, ४ = ऊह्ये २, १, १४—१५ ;—४, २, ८—९—१०—११—१२ ;—७, १, १९ ;—७, २, १४—१५—१६ ;—८, १, १६ ;—८, २, १८ ;—९, २, १५ ;—९, ३, ९ ;—१२, १, ३ ;—१२, २, १६ ;—१४, १, ९ ;—१४, २, ५—७ ; = १६, २, २—३ ;—१८, २, २—३—१० ;—२२, २, १० = ऊह्ये १, १, ६ :—१. २. ११ ; —२, २, ९ ;—४, १, १० ;—५, २, १० ;—६, १, ९—१४ ।

१ ३ ख,

(इन्द्रसामनोद्दे।) अभिसो३मासआयवाः। पवन्ते मदियम्म। दा। औ३हो। आऔ३हो। समुद्रस्याधिविष्टपेमनीषि। णा। औ३हो। आऔ३हो। मत्सरासो मदच्यु। ता। औ३हो। आऔ३हो३४३। ओ२२३४५इ। डा॥ १६॥

अभिसोमास आ। हो५यवाः। पवन्तेमद्यम्मदम्पवन्तेम। दिया५होइ। मा२३दाम्। समुद्रस्याधिविष्टपेमनीषिणाः। मनाहोइ। षा२३इणाः। मत्सरासोमदच्युताः। मदाहोइ। च्यू२३ता३४३ः। ओ२३४५इ। डा। ॥ १७॥

(स्वः पृष्ठम्॥) अभा२इसोमा३४। औहोपुसआयवाः। पवा२ंतेमा३४। औहोपुदियम्मदाम्। समू२द्रस्या३४। औहो५धिविष्टपाइ। ओये३। मा२ना२३४-

औहोवा। पी२३४णाः। ऊ२३४पा। २। मत्सरासो२३।
मा२दा२३४औहोवा च्यू२३४ताः॥ १८॥

(इन्द्रसामानि त्रीणि॥) औहोवा। अभिसोमास-
आयवः। औहोवा। पवा२। तेमा३ओ५वा६५६। दि-
यम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिविष्टपेरमनी-
षिणा२ः। औ३हो३१इ। मत्सा२। रासा३ओ५वा६५६।
मदच्युता२३४५ः॥ १९॥

अभिसोमासआया६वाः। पवा२। तेमा३ओ५वा-
६५६। दियम्मदम्। समू२। द्रस्या३ओ५वा६५६। धिवि-
ष्टपेरमनीषिणा२ः। मत्सा२। रासा३ओ५वा६५६। मद-
च्युता२३४५ः॥ २०॥

अभिसोमासआया६वाः। पवन्तादूमा। दिया२मा-

अथ नवमी।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
पुनानः सोम जागृविरव्यो वारैः* परि प्रियः।
१२ ३ १२ ३ १
त्वं विप्रो अभवो†ऽङ्गिरस्तम
२ ३ १ २
मध्वा यज्ञं मिमिक्ष णः‡ ॥ ९ ॥ ५३¶

५ १ २ १ २ १ २ ४ ५
२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइषाइणाः।
१ २ २ १ १ ३ ५ २ २ ५
मात्सरासोऽ२३। मार्दाऽ२३४औहोवा। च्यूऽ२३४ताः ॥२१॥५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्तः" अभितो निर्गमयन्ति। कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनस ईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ ॥ ८ ॥ ५२

* "अव्योवारे"-इति
† "वोऽङ्गिरस्तमो"-इति,
‡ "मिक्षतः"-इति च

¶ ऋ० ७, ५, १३, १।

§ 'आयवः मनुष्याः'-इति वि०। 'आयवः'-इति मनुष्यनामसु सप्तदशं नैघण्टुकम् (२, ३)।

अथ दशमी ।

१ २ १ २ ३ १ २ ३ १ २ ३ १
इन्द्रायपवतेमदःसोमोमरुत्वतेसुतः ।

५ र ४ ५र ४र ५ ४ १ र र
(सोमसाम ॥) पुनानःसोमजागृविरव्याः । वारैःपा-
१ र र १ २
रिप्रिया२ः । त्वंविप्रोअभवोऽङ्गिरा२३४ । स्तमा३ ।
१ २र १ १ ३ ५र र २ ५
माध्वायज्ञा२३म् । मा२इमा२३४औहोवा । त्ना२३४णाः ।
॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिक्षरसि। "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि। स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"¶ सेक्तुमिच्छसि। मिहेः सेचनार्थस्य (भ्वा०प०) सनि रूपम् ॥ ८ ॥ ५३

* 'प्रियः' प्रियतरः, भूतानां प्रियः'-इति वि० ।
† 'सार्वकालिको लङ्' (३, ४, ६) ।
‡ सुपां सुलुक् (७, १, ३९) ।
¶ 'मिमिक्ष सिञ्च' इति वि० ।

३ १ २ ३ १र २र ३
सहस्रधारोऽत्यव्यमर्षति
१ २ ३ १ २
तमीमृजन्त्यायवः ॥ १० ॥५४*

५ र २ १ १र र
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २र १ १
सुता२ः। स। हस्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिआयार३वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ र १ र १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
१र र १ १ १ १ २र
सोमोमारु२। त्वतेहो२इ। सुता२ः। स। हस्रधारः।
१ १ २ ५ २ ५ १
अतिअव्यमा। र्षाताओ२३४वा। ऊ२३४पा। तमीहो-
१ १र २ १
२इ। मार्जी२। तिआया२३वा३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ र २ ४ ५ ४ ५ १र र
(सोमसाम ॥) इन्द्राया३पावता३इमदाः। सोमोम-
२ २ १ २र १ २
रुत्वता१इसु३ताः। स। हस्रधारः। अतिअव्यमा३।

* ऋ० ७, ४, १५, २।

अथैकादशी ।

१ २   ३ १   २ ३   १र   १ र   ३   १   २
प्रवस्ववाजसातमोभिविश्वानिवार्य्या ।
१   १ ३ १   २ ३ १र   २र
त्वᳫसमुद्रःप्रथमविधर्म
३ १ २   ३ २
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४ ५   २ १ २   २   ४ ५   १   ३   ५र र
षाती । तमाऔ३होइ३ । माजा । तार्याऽ२३४औहो
२   ५
वा । याऽ२३४वाः ॥ २५ ॥

४ ५ र ४र   ३   ५   २ १ २र
पवस्ववाजसा । वृत्हा । ताऽ२३४माः । अभिविश्वा-
१   २र   १   २   ५र र   १ २ १र   २
निवारिया । त्वᳫसाऽरमूऽ२३४औहोवा । द्रःप्रथमेविधर्म-
२   २   १   ३   ५र र   २   २
न् । दाइवायेर । भ्याऽरःसोऽ२३४औहोवा । ममत्स-
२
राः१ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मरुत्वते" मरुद्भिस्तद्वते "इन्द्राय" इन्द्रार्थं "पवते" चरति । ततः "सहस्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

* ऋ० ७, ४, १६, ३ ।

अथ द्वादशी।

१२ २ २३१ ३ १ २
पवमानो अजीजनत् दिवश्चित्रं न तन्यतुम्।

पवमानाअद्वत्तपवित्रमतिधारया।

२१२ २१२ ३ १२२२२
मरुत्वन्तोमत्सराइन्द्रियाहया

१२ ३ १ १२२
मेधामभिप्रियाऽसिच ॥१२॥५६*

॥ इति तृतीय-दशति ॥

४५ २ २ ४ १ २
(पवित्रम् ॥) पवमानाअद्वत्तपवाइ। त्रामतिधार

हे "सोम!" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोत्राणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य लम्भकस्त्वं "पवस्व" चर। हे सोम! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" संमुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक!|| त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्या"-"काव्या"-इति च क्रमेण साम्नऋचः पाठाः॥ ११ ॥ ५५ ।

---

* ऋ० ७,५,१६,५।

† 'वार्या वरणीयेन उदकेन' इति वि०।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२)॥

¶ "समुनत्तीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि०।

|| "विधर्मन्=विधर्मणि, विविधकर्मणि कर्मकारणे देवे' इति वि०।

१　र　र　२　१०　१　२
यामरुत्वन्तोमत्सराइन्द्रो३याः। हयाः। मा२३इधाम्।
१　२　१　३　५र र　३　५
अभायै३। प्रा२या२३४औहोवा। सी२३४वा॥ २७ ॥५६

“पवमानाः” पूयमानाः सोमाः “धारया” आत्मीयया “पवित्रम्”* “अति” अतीत्य “असृक्षत” सृज्यन्ते। कीदृशाः? “मरुत्वन्तः” मरुद्भिर्युक्ताः “मत्सराः” मदकराः “इन्द्रियाः” इन्द्रजुष्टाः। “मेधां”† स्तुतिं “प्रयांसि” अन्नानि च “अभि” लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा “हयाः” यज्ञे गन्तारः सृज्यन्ते॥१२॥५६

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः॥ ५ ॥

॥ इति वार्हतम् ॥

---

* “पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते। ‘येन देवाः पवित्रेणात्मानं पुनते सदे’त्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। ‘गभस्तिपूतो नृभिरद्रिभिः सुत’ इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। ‘शतपवित्राः स्वधया मदन्ती’ र्बह्वुदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते। इन्द्रः पवित्रमुच्यते। ‘अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु’ इत्यपि निगमो भवति” इति (नि० ५, ६)।

† ‘मेधां प्रज्ञाम्’-इति वि०।

अथ षष्ठेखण्डे—

सैषा प्रथमा।

१र २र ३ १ ३ २ ३ १ २ ३ १ १ ३ २ ३ १र २र
प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष।
३ १ २ ३ १ २ ३ १ ३ १ २ ३
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा
१ २ ३ १ २
बर्हीं रशनाभिर्नयन्ति ॥ १ ॥ ५७ *

(अशनम् ॥) ओइप्रतु। इहा३१। द्रवा। परि कोा३। शन्निषीदा। औइनभिः। इहा३१। पुना। नो३अभि। वाजमर्षा। आअश्वम्। इहा३१। नत्वा। वा३जिनम्। मर्जयन्ताः। ओाअच्छ। इहा३१। बर्हीइः। रश्मना। भा३४३इः। ना३या५न्ताई५६इ ॥ २८ ॥

(वृषौशनं साम ॥) प्रतु। एप्रतु। द्रवा। द्रवा। परिकोा३। शन्निषीदा। नृभिः। एनृभिः। पुना। पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वम्। नत्वा। नत्वा। वा३जिनम्। मर्जयताः। अच्छ। एअच्छा।

* छ० १, १, १०, १=ऋ० ७, ३, २२, १=उत्त० १, १, ४—१९, १, ७।

२ १ २ १ २ ०२र २ ३ २ ५ ५
बर्चाइः। बर्चाइः। रश्मनाभिः। नये३४। चियाइचा-
२ १ १ १ १ १
उवो। ता२३४५इ॥ २९॥

४ ५ ४ १ र
(जानस्थाभीवर्तौदौ॥) प्रतुदा। वांपरिकोशाम्।
२ २ १ २ ३र २ ३र ५ २ १
निषी३दा। साइदा। औहोइ। औहो३वा। नृभिः
र र ७ २ १ २ ३र १
पुनानोअभिवा। जमार३र्षा। आर्षा। औहोइ।
३र ५ २ १ र र ७
औहो३वा। अश्वन्नत्वावाजिनम्रा। जया२३न्ताः।
१ २ ३र २ ३र ५ १र२ १ २
यांता। औहोइ। औहो३वा। अक्रांवर्चाइः। रश्म-
१र२ ३२ ५ ५ ३ १ १ १ १
नाभिः। नये३४। चियाइचाउवा। ता२३४५इ॥ ३०॥

५र ५ ३ २ ५ ५ २ १
चाओ६इचा। उऊवा३४। ओ६इचा। प्रतुद्रवा।
२ २ ३ ४ ५ २ १ २ १ २ १
परिको३। शन्निषीदां। नंभाइःपुना। नो३अभि।
२ ३ ४ ५ २ १ २ १ २ ३ ४ ५
वाजमर्षा। अश्वनत्वा। वा३जिवम्। भर्जयन्ताः।
र ३ २ ५ ५ २ १र २ १
चाओ६इचा। उऊवा३४। ओ६इचा। अक्रावर्चाइः।
२ १ र २ २ ४
रश्मना। भा३४३इः। ना३या५ ०ता६५६इ॥ ३१॥

४ १ १ २
( त्रिष्टुबौशनम् ॥) प्रातू। द्रवापरिकोशाम्।
२ २ १ २ १ २ १ २ ३ १ २
निषीइदा। नृभाइःपुना। नोइअभि। वाजमर्षा।
१ २ र ७ २ १२ २ र
अश्वन्नत्वावाजिनम्मा। जयाररताः। अर्कावर्हीइः।
२ १ र २ १ ४
रशना। भाइ४इइः। नाइयाप्र०ताईपुईइ॥ २२ ॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं† "प्रद्रव" प्रगच्छ आगत्य च "कोशं" द्रोणकलशं परिनिषीद" निषण्णोभव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्गामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव त्वां यथामार्जयन्ति तद्वत् त्वाम् "अर्जयन्तः" शोधयन्तः "वर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावद्वाय-ताभिरङ्गुलीभिः "नयन्ति" अध्वर्यु प्रमुखाः ॥ १ ॥ ५७

---

* "काव्यः"-इति ऋषि नै०।

† 'अच्छ आप्तुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् (६, ३, १३६ पा०।)

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूतवयाः इत्यर्चिव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथमन्नैघण्टुकम् (२, १५)।

§ 'वर्हिः प्रस्तरम्'-इति वि०।

‖ 'रशनाः'-इति अङ्गुलिनामसु षष्ठं नैघण्टुकम्।

अथ द्वितीया।

१ २र ३ १र २ ३ १र ३ २ ३ २ २ १ १
प्रकाव्यमुशनेव ब्रुवाणोदेवोदेवानांजनिमाविवक्ति।
१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः
२ १ २ ३ १ ३क २र ३ १ २
पदावराहोअभ्येतिरेभन्॥ २ ॥ ५८*

४ ५ १र १
(वाजसनीद्वे ॥) प्रा। काविया २म्। उशनेवा २।
१ २ १र र १र १
ब्रवार३णाः। देवोदेवा २। नाञ्जनिमा २। विवा-
२ १ १ १ १
२३क्तौ। महिव्राता २ः। शुचिबन्धू २ः। पवार३काः।
१ र १र ३ २ ५र र ३
पदावारा २। होअभियार३। तिरा३४औहोवा। भा
१ १ १ १
२३४५न्॥ २३ ॥
१ र १ १ १र र
प्रकाविया २म्। उशनेवा २। ब्रुवाणा २ः। देवो
१र १ १
देवा २ः। नाञ्जनिमा २। विवाक्तौ २। महिव्राता २ः।
१ १ १ र १
शुचिबन्ध २। पवाका २ः। पदावारा २। होर।
२ ३ ५र र १ १र ३ १ १ १ १
भिया३४औहोवा। तिरेभा२३४५न्॥ २४ ॥

---

* उ० ४, २, १, १= ऋ० ७, ४, १२, २=जरे ६, २, ५;— १६, २, १९;— २२
१, ३—६।

(वाजजित्साम ॥) प्रकाव्यमुशनेवब्रूऽवाणो । देर-
३४वा: । देवानाञ्जनिमाविवा३क्ती । मा२३४ही । व्रतः
शुचिबन्धुः पाश्वाकः । पा२३४दा । वराहोअभ्येतिरा-
२३ । हाउवा३ । भा२३४५न् ॥ ३५ ॥

(वाराहम् ॥) हाउहाउ । ऊप् । प्रकावियाम् ।
उशने । वब्रुवाणाः । देवोदेवा । ना३०जनि । मावि
वक्ती । मचिव्रताः । शुचिवा३ । धुःपवाकाः । हाउ
हाउ । ऊप् । पदावरा । हो३अभि । आ३४३इ ।
तो३रा५इभां६५६न् ॥ ३६ ॥

॥ इति पञ्चदशस्यार्द्धः प्रपाठकः ॥

वृषगणो वासितऋषिः* । "उशने एव" तन्नामकऋषि-
रिव "काव्य" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

---

* "वृषगणो वासिष्ठः"-इति ऋषि- मै० ।

† 'देवः सोमः'-इति वि० ।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [वच परिभाषणे (अदा० प०)। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम्] "महिव्रतः" प्रभूतकर्मा†। "शुचिबन्धुः" बध्नन्ति गृह्णन्तीति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरञ्च तदहश्च वराहः ["राजाहःसखिभ्यष्टच्" इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वात् मत्वर्थीयोऽच्] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन्§ "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यद्वा कश्चन वराहः "पदा" पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत् ॥ २ ॥ ५८

---

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः व्रतस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरो अद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पतिर्वृषभिर्वराहैः'। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्"-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।

अथ तृतीया।

१ २र २र ३ १र ३र ३ १ २ ३ १र २र ३ १

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्।

१ २ ३ १ २ ३ १ २ ३

गावो यन्ति गोपतिं पृच्छमानाः

१ ३ १ ३ २

सोमं यन्ति मतयो वावशानाः॥ ३॥ ५८९ *

१ २ १

(संक्रोशास्त्रयः॥) होइ। हो। हा३होइ।

२ १र २ २ १ २ ३ ४ ५ १ १

तिस्रोवाचा। ई३रय। तिप्रवह्नीः। होइया२३होइ।

२ १र २ २ १ २ ३ ४ ५ २र १ १

तिस्रो वाचाः। ई३रय। तिप्रवह्नीः। आ। होइया२३होइ।

२ १र २ २ १ २ ३ ४ ५ १ २ १

तिस्रो वाचाः। ई३रय। तिप्रवह्नीः। होइहा। इहोइहा।

५ २ २ १र २ २ १ २ ३ ४ ५

औ३हो३१इ। इहा। तिस्रो वाचाः। ई३रय। तिप्रवह्नीः।

१ २१ ५ २ २ १र २

होइया। इयाइया। औ३हो३१इ। इया। तिस्रो वाचाः।

२ १ २ ३ ४ ५

ई३रय। तिप्रवह्नीः॥ १॥

३ २ ३ ५ २र १

(वैणविंशाले द्वे॥) इहोइह। इहोइहा३हो।

३र १ ३ ५ २ १र २ ० १ २ ३ ४ ५ ४र

वाहोइह। तिस्रो वाचाः। ई३रय। तिप्रवह्नीः। इहो

* उ० २, २, १०, १=ऋ० ९, ९, १७, ४=जप्र २, १, १७=ऊहा ३, २, ६।

वा५। इहोवा२३। ई३४हहाइ। ई५। इहा।
तिस्रोवाचाः। ई२रय। तिप्रवक्तीः। इहोवा२३।
ई३४हहाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-
वक्तीः। आऔ२हो। आऔ२हो३४। औहोवा।
हा२हाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्तीः। आ
औ२होवाहा३४। औहोवा। तिस्रोवाचाः। ई३
रय। तिप्रवक्तीः॥ २॥

ओहो३। ओहाओहा। ऋतस्यधाइ। तौ३०ब्रह्म
णामनीषाम्। हहहोइ। हंहहाहहो३। गावोयन्ताइ।
गो३पतिम्। पृच्छमानाः। इहहोइ। इहहाहंहोइ।
सोमंयन्ताइ। मतयः। वा३४३। वा३शापृना६५६ः॥
॥ ३॥ ५९

१५ख,

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं"† धारयित्रीं "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं" ¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो, "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति|| ॥ ३ ॥ ५८

* "शाक्त्यः"-इति ऋषि-नै०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते पराशातयिता यातूनाम् इन्द्रो यातूनां मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३०॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणासम्बन्धेन पृच्छमाना इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते परं मेधावि-नामसु द्वाविंशतितमत्वेन घण्टक-मिति लक्ष्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

|| यास्कव्याख्यानमित्थम्—"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०१,१४)॥ विवरणकारस्तु पूर्वं यथोक्तं व्याख्यायानन्तरमपरमपि व्याख्यानमालम्ब्य विस्तृतवान् तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथापीष्टादृक्षे व्याख्यातेति कृत्वा तेनापि आम्नानानुस्मरणार्थं मालिख्यत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्वरजस्तमांसि अथवा जाग्रत्स्वप्नसुषुप्ति-वृत्तयः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य

अथ चतुर्थी।

३ २ ३२ ३१२ ३१२ २ २३२ ३१२ ३१२
अ प्रेषा इमना पूयमानो देवो देवेभिः समपृक्त रसम्।
३ २ ३२ ३१२ ३१२ ३२ ३२३१२ ३२३ २
सुतः पवित्रम्पर्येति रेभन्मितेव सद्म पशुमन्ति होता॥४॥६०॥*

(अगस्त्यस्य यमिके द्वे ॥). अत्रां३४औहोवा। प्रेषा। हे३
मना। पूयमानाः। उंहुवाइ। अत्रां३४औहोवा।
प्रेषा। हे३मना। पूयमानाः। हाइ। उहुवा
देवा३४औहोवा। देवाइ। भोइः सम। पृक्तरसाम्।

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा हय इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषां गावः रश्मयः तेन विसृष्टा अथवा उदकानि' एतमेव गोपति रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्य मतयः। प्रज्ञायते विषयाः अतिप्रकाशत इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मा वह्निरात्मा भवति। वय्यादिगणसंयोगात्। सः तिस्रो वाचः प्रेरयति। विद्या बुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीति मनसः इष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण शब्दाद्यनुगमन्ति। एतमेवमात्मानं सोमङ्कामयमाना इव यन्ति न भूयः तदर्थं प्रादुर्भवन्ति'-इति।

* उ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = ऊह ६ (२। ७.

२ २ १ २ ३र ४र ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। चा३म्यरि।
२ ३ ४ ५ २ र १ २ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
झा३पशु। मन्तिहोता। पशु। मा३४३। तीइहोपू
तार्इ५इ॥ ४॥
१र २र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ ३ ४ ५ २र १र र २ १ २ ३ ४ ५
पूयमाना:। देवोदेवाइ। भौ३:सम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १र २र ३र २
सुत:पवाइ। चा३म्यरि। एतिरेभान्। औहोवाहा-
१ ३ २ १र २ १ २
३होइ। इहा। मितेवसा। झा३पशू। मा३४३।
२ ४
तीइहोपुतार्इ५इ॥ ५॥ ६०

वसिष्ठऋषि:*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थ: (भ्वा०प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं † प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमान:" हिरण्य-

* "मैत्रावरुण:"-इति ऋषि-नै०।

† "सावेकाचस्तृतीयादिर्विभक्ति:"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकादल्लोपाभाव:।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
१र २र ३ १र २र ३ १ २ ३ १र २र
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥५॥६१*

२र २ १
(कालकाक्रन्दौ॥) सोमः पवते जनितामा३ता इना २म्।
२ २ २ १ १र२ २
जनिता दिवो जनिता पृ३था इव्या २ः। जनिताग्नेर्जनिता सू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवो" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के। (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्म्मितं‡ "पर्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्म्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्येति तद्वत्॥ ४॥ ६०

* उ० ३, १, १९, १ = ऋ० ७, ४, ६, ५ = ऋग्वेद ९, ९, १९;—८, ९, १;—१२, १, १०—१६।

† 'देवेभिः देवेभ्यः वसादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति बहुओकपम् (६, १, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

रियार३स्था। जनितेन्द्रा। स्या३जनि। ता३४३। तार

वापुइष्णा६५६ः॥ ६॥

सोम पवते जनिता। ए३। औ३होपुवा। माता

२३४५इना६५६म्। जनितरदिवोजनितापृथिव्याः। जना-

२इतार३४ग्नेः। जनिता। सू३४३। री३यापुस्या६५६।

जनितेन्द्रस्यजनितोतविष्णोर२३४५ः॥ ७॥

(जमिचे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।

होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३

जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ

थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ

जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।

जनात्। जनितेन्द्रा। स्या३जनि। ता३४३। ता३वा

पुइष्णो६५६ः॥ ८॥

जनद्वाउ । ३ । जनदाउ । ३ । जनत् । हाइ । ३ ।

२र १ २ १ २ ३ ४ ५ २ १र

सामः पवा । ते३जनि । तामतीनाम् । जनितादाइ ।

२ १ २ ३ ४ ५ २ १र २१२१ ३ ४ ५

वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।

४ ५ ४ ५ १ र २

जनद्वाउ । ३ । जनदाउ । ३ । जनत् । होयि । ३ । जनि-

१ र २ १ २ २ ४

तेन्द्रा । स्या३जनि । तो३४३ । ता३वा५यिष्णो६५६ः

॥ ९ ॥ ६१

प्रतर्द्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तोतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३ ) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

---

* "दैवोदासिः" इति वि० ।

† अवेदं विवरणम्—'सोमः पवते । विनियोगोऽस्य चतुर्थेऽहनि । अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीनां । जनयितृत्वं न सम्भवात् । यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि विष्णोर्व्याप्निमतदनि । जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता । अधिदैवमेन्द्रः सोमः यदात्मनि तदायमर्थः । सर्वमिदं अयति । आत्मा सोमः पवते साधयति भोक्तृत्वात् । आत्मा सत्कारेण वा । प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्युयोर्ग्रहणान्तरिक्षस्यापि अग्न्यादीनाञ्च स्थानानां तिसृणां विष्णोश्च व्याप्निमतः ॥"

अथ षष्ठी ।

३ १ २ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण*मवावशन्तवाणीः ।
३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि ॥ ६॥६२॥‡

२ २ ५ २ ३र २
(अङ्गिरसां व्रतोपोहः ॥) ओ३हायि । ओ३हा । ओहा ।
१ ५ २ २ १ २ १ २३
इया२ । ओ३हा३ए । अभित्रिपा । ष्ठा३०वृष । णंव-
४ ५ २ १र २ १र २ ३ ४ ५
योधाम् । अङ्गोषिणाम् । अवाव । शन्तवाणीः ।
२ १र २ १ ० ३ ४ ५ २ १ १ २
वनावसा । नो३वरुणोनसिन्धूः । ओ३हायि । ओ३-
५र २ १ ५र २ २ १
हा । ओहा । इया२ । ओ३हा३ए । विरत्नधाः ।
२ १. र २ २ ४ ५
दयते । वा३४३ । रो३या५णाई५ई यि ॥ १० ॥ ६२

प्रकाशयिता । "सूर्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता । "उत" अपि च । "विष्णोः" व्यापकस्य "जनिता" जनयिता¶ । एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्तइति ॥ ५ ॥ ६१

---

* "आङ्गूषाणाम्"-इति;
† "सिन्धून्"-इति च } ऋ० ।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, ७ = जडु ७, २, १७ ।

¶ अत्राह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी।

१ २ ३१ २३१२ २२ ३ १२ ३१२ २२ १ २
अक्रान्त्समुद्रः प्रथमे विधर्म्मञ्जनयन्प्रजा भुवनस्य गोपाः*।

वसिष्ठऋषिः†। "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादि-स्थानानि सवनानि वा यस्य स तथोक्तस्तम्। "वृषणं" वर्षकम्। "वयोधाम्" अन्नस्य दातारम्‡। "अङ्गोषिणं" आघोषन्तं सोमं¶, "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा। "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत्। "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६ ॥ ६२

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्य-रश्मीनामित्यधिदैवतम्। अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः। अपिवा सर्वाभिर्विभूतिभिर्विभूततम आत्मेत्यात्मगतिमाचष्टे"—इति प० २, १२।

* "भुवनस्य राजा"—इति ऋ०।

† "मैत्रावरुणः"—इति ऋषि अनु०।

‡ "सुतः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमनैघण्टुकत्वेन अधन्ते (२, ७)। 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि०।

¶ "आङ्गूषस्तोम आघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्र-वन्तः"—इत्यादि नि० ५, ११।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४।

‖ 'वार्याणि वननीयानि धनानि'—इति वि०।

१ २ ३ १ २ २ १ २ ३ १ १ ३ १ २ २ २ ३ १ २
वृषापवित्रे अधिसानो अव्येबृहत्सोमोवावृधेस्वानो*-
१२
अद्रिः ॥ ७ ॥६३†

२ १ १ २२ १ २ १२ १ १
(सत्यावैयश्वम् ॥) हो। होपि। अक्रांत्समुद्रःप्रथमेविधामान्।
१ २ १ २ १ १ २ १ १ १ २
होहोयि। जनयनप्रजाभुवनस्यगोपाः। हो। होयि वृ
२२ १ २२ १ २ १२ २ १ २ १
षापवित्रे अधिसाने।२अ। व्यायि। हो। चो। वृह
२ २ ७ २ २ २ १२ २ २ २ २ २
त्सोमो२वावृधेस्वाने।अ। द्रा। औ३। होवाहाउवा
२ २२ १२ १ १ १ १
३। ए३। स्वानाअ। द्रीर३४५ः॥ ११ ॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य"¶ उदकस्य "विधर्म्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे हलो न ङतायां सिजलोपे मकारस्य

* "स्वानो"—इति ऋ०।

† उ० ५, २, १, १=ऋ० ७, ४, १८, प= मण्डले ९, २, १ ;—१९, २, ५—८—९; अष्टो१, २, ५।

‡ "पराशरः"—इति ऋषि-मै०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् ( १,१२ )।

"सोमो"धातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः† ॥

"अद्रिः"-"इन्द्रः" इति च साम्नऋचः पाठौ ॥ ७ ॥ ६३

अथाष्टमी ।

१०२ . ३ २ ३ १ २ ३ १ १ ३ २ ३ १ २ ३ १ २ ३ १

कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ८ ॥ ६४ *

---

* ऋ० ७, ४, ५, १ ।

† अत्रेदं विवरणम्—

अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, क्रान्तवान् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन जनयन् प्रजाः• प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रक्षिता वृषा सक्ता पवित्रे वा समाय । अधि-उपरि सानो समुच्छ्रयन्तो अव्ये अविमये । बृहत् सोम वावृधे वर्द्धते स्वानः अद्रिः अद्ररणः । यद्वा अक्रान् समुद्रः सामर्थ्याद् अत्यक्रमीत् अतीतं गच्छत्युदयादस्त सद्य समुद्रः । आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा जनयन् वर्षकर्मणा । भुवनस्य त्रैलोक्यस्य गोपा रक्षिता वृषा वर्षणशीलः । पवित्रे व्याप्तिमये अधिसानः अभिषिच्यमाणः सौम्यैः । कात्स्न्ये वर्द्धते वृहदिति वृहद्विशेषणम् । स्वानः सुतः अद्रिरादित्य अद्ररणः अत्यक्रामत् अधिष्ठितवान् । समुद्रः आत्मा अभिद्रवत तं भूतानि परमेभ्यः व्योम्नि भूतेन्द्रियनिरुपशरीरे जनयन् ज्ञानकर्मणा बोधमुत्पादयन् प्रजा वर्द्धयन् । भुवनस्य गोप्ता प्रकाशरूपत्वात् । वृषा पवित्रे सत्यमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे ज्ञानमये अवतीर्णत्यर्थः । मत्यर्थाश्च वृद्धार्थाः । अधिसानो सम्बध्यमान-शब्दादिषु महत्त्वाय सुष्ठु वर्षितं पवित्रे । प्रवः अद्रिः अदरयः"—इति ॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतम् । अथाध्यात्ममत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे"—इति प० २,१९ ।

अथ षष्ठी।

१ २ २ १ २ ३ २उ
वृषा मतीनाम्पवते विचक्षणः

३ १ २ ३ १र २र ३ २
सोमो अह्ना*प्रतरीतोषसा†न्दिवः।

३ १र २र ३ १ २ २
प्राणा सिन्धूनां कलशाँ२ अचिक्रद

१ १ ३.१ २ ३ १ २ ३ १ २
दिन्द्रस्य हार्द्याविशन्मनीषिभिः॥ ६ ॥ ९३ ‡

मर्थाय। तथा "नृभिः" नेतृभिऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न"¶ अश्व इव स यथा प्रेरितोऽनसेन गच्छति तद्वत्। "वृथा" अप्रयत्नेन "पाजांसि" बलानि§ स्वीयान् वेगान् "कृणुते" कुरुते "नदीषु"॥ वसतीवरीषु ताभिरित्यर्थः। प्रसिक्त इत्यर्थः। अथ सभिषव-समयाभिप्रायः+ ॥ ५ ॥ ९२

* "अह्नः"—इति } ऋग्वेदीय पाठौ।
† "उषसो"—इति }

‡ उ० २,१,१७,१ = ऋ० ७,३,१४,४ = ऊचे २,१,१०—९,१,५—१६,१,१७ = ऊह्य ४,१,२।

¶ "अत्यः"—इति अश्व-नामसु प्रथमं नैघण्टुकम् १,१४।

§ 'पाजांसि अन्नानि'—इति वि०। "पाजः"—इत्यन्ननामसु पाठभेदेन तृतीयं नैघण्टुकम् (२,१)—बलनामसु च द्वितीयम् (२,९)।

॥ 'नदीषु रश्मिषु'—इति वि०।

+ 'योगोऽस्यास्मेऽहनि'—इति वि०।

(ऐडयामम॥) वृषामातीर३। नापवाता२३इ। ए३। विचक्षणए३। सोमोआक्षा२३म। प्रतराईतार३। ए३। उषसान्दिवए३। प्राणासाइन्धू२३। नाक्ष्लाम्रा२३। ए३। अचिक्रदद्दे३। इन्द्रस्याहा२३। दियावाइश्रा२३न्। ए३। मनिषिभिरे३४३। ओ२३४५इ। डा॥२१॥

(यामम॥) वृषामतीनाम्पव। ताइवा१इचा२३४। च। णा२३४५ः। सोमोअक्षाम्पतरी। तोषा१सा२३४म। दि। वा२३४५ः। प्राणासिन्धूनाकल। श्रा२आ१चा२३४इ। क्र। दा२३४५त्। आइन्द्रस्यहादिं यावि। श्रान्मा१ना२३४इ। षिभा२३उ। वा३४५॥२२॥

१ १ १२ २ २ १ २ १२
वृषा२मता२इ। नाम्यवतेविचक्षा२३णाः। सोमो

१ १ २२ २१२ २ १२ १
२अक्रा२म। प्रतरीतोषसान्दा२३इवाः। प्राणा२शि

१२ २ २ १ २ १ २
न्धू२। नाकलशा५अचिक्रा२३दात्। इन्द्रा२स्यहा२।

१ २ १ १२ २ १
दियाविशन्मनीषा२३इभा३४३इः। ओ२३४५इ। डा॥

॥ २३ ॥ ९३

खिगण ऋषिः*। अयं "सोमः" "पवते" अभिषूयते†। कीदृशः सोमः ? "मतीनां" मतयः स्तोतारस्तेषां‡ "वृषा" वर्षकः कामानाम्। "विचक्षणः" विद्रष्टा¶ "अक्राम्" उषसां "दिवः" द्युलोकस्यादित्यस्य वा "प्रतरीता" प्रवर्द्धयिता§। किञ्च। "सिन्धूनां" स्यन्दमानाना मुदकानां॥ "प्राणा" [प्रकर्षेण अनिति चेष्टते इति प्राणा] कर्त्ता सोमः "कलशान्" "अचिक्रदत्" धारया अध्वनयत् प्रवेष्टुम्। यद्वा। "सिन्धूनां" [तृतीयार्थे षष्ठी]

* "कविः भार्गवः"—इति ऋषि-नै०।

† यज्ञपात्रेषु चरते इत्यर्थः।

‡ "मतीनां प्रज्ञानाम्"—इति वि०। "मतयः"—इति मेधावि-नामसु च द्वात्रिंशत्तमं नैघण्टुकम् ३,१५।

¶ "विचक्षणः विविधं प्रकाशयिता सोमः"—इति वि०।

§ 'प्रतरीता प्रकर्षेण तारयिता'—इति वि०।

॥ "सिन्धवः"—इति नदीनामसु एकत्रिंशत्तमं नैघण्टुकम् १, १३।

अथ सप्तमी ।

१ २ ३ १ २ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे
३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि ।
३ २ ३ १ र २ र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे
१ २ ३ २ ३ १ र २ र
चारूणिचक्रेयदृतैरवर्द्धत ॥ ७ ॥ ९४ *

१ ५ र ४ ५ र
( मरुताम्धेनुमाम ॥ ) त्रा२३४इ: । अस्मैसप्तधेन
५ र र ४ ५ २ १ र र १ र
वोदुदौ । दोह्राइराइ । सत्यामाशिरम्परमाइ । वियो

सिन्धुभिरद्भिः "प्राणा" [ प्रा पूरणे ( अ० प० ] पूर्णः "सोमः" कलशान् "अभि" लक्ष्य क्रन्दते । किं कुर्वन् ? इन्द्रस्य "हार्दि" हृदयम् "अविशन्" प्रविशन् "मनीषिभिः" मनसईशित्रीभिः स्तुतिभिः सदेति शेषः [यद्वा । व्यवहितमपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते †] ॥

"प्राणा"—इति, "क्राणा" ‡—इति, "अचिक्रदद्"—"अवीविशत्"-इति पाठाः ॥ ६ ॥ ९३

* उ० ६,१,१७,१ = ऋ० ७,२,२३,१. = जहे ८,१,१२ ।

† 'विनियोगोऽस्य' तृतीयेऽहनि'—इति वि० ।

‡ क्राणाः—इत्यस्य कुर्वाणाइत्यर्थः स्वीकृतो यास्केन न० ४, १९ ।

१ २
मानो२। त्वार्यन्याभुवना। निर्णिजा१२३इ। चा
२ ५ २र १ २र १ २ ४
रूणा१२३४इ चा। क्रे यदृतैः। आवा३इर्द्धा५ता२६५६ ॥२४॥९४

रेणुर्ऋषिः*। "अस्मै" पवमानाय "परमे" उत्कृष्टे "व्योमनि" [ विविधं ओम अवनं गमनं देवाना मत्रेति] व्योमा यज्ञः तस्मिन् स्थिताय। यद्वा। परमे व्योमन्यन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्याम्" यथार्थभूतं "आशिरम्" आश्रयण-साधनं क्षीरादि "दुदुह्रिरे" दुहन्ति [ यद्वा। त्रिःसप्त=द्वादश मासाः—पञ्चर्त्तवः—त्रयइमे लोकाः—असावादित्य एकविंशइति। एतैः सर्वैः सह गोषु पय उत्पाद्यते तद्गावो दुहन्तीति ]। किञ्च। अयं सोमः "अन्या" अन्यानि चत्वारि "भुवना" उदकानि वसतीवरीस्तिस्त्रश्चैकधना इति तानि चतुःसङ्ख्यानि† "चारूणि" कल्याणानि "निर्णिजे" निर्णेजनाय परिशोधनाय परिपोषणाय वा "चक्रे" तदा करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैः "अवर्द्धत" वृद्धितवान् तदा करोति‡।

"दुदुह्रिरे"—"दुदुह्रे"—इति, "परमे"—"पूर्व्ये"—इति च पाठः ॥ ७॥ ९४

---

* "वैश्वामित्रः"—इति ऋषि-नै०।

† वसतीवरीसञ्ज्ञाना मपा माधार एको घटः, एकधन नामकाश्च त्रयः। तत्र वसतीवरी-घटोदकेनाभिषुतसोमरसस्य वर्द्धनं भवति, एकधनघटानाम्तु सोमाभिषवे उपयोगः।

‡ विनियोगोऽस्याभिप्लवे। अस्मै सोमाय। सप्त धेनवः सप्तच्छन्दांसि। त्रिः=प्रातःसवन-

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रायसोमसुषुतःपरिस्रव

२र ३ १ २ ३ १
अमीवाभवतुरक्षसासह।

३ १ २ ३ १ ३
मातेरसस्यमत्सतद्वयाविनो

१ २ ३ १ २ ३ १ २
द्रविणस्वन्तइहसन्त्विन्दवः॥ ८॥ ९५*

* उ० ७,२,१०,१।

माध्यन्दिन-तृतीयसवनेषु दुदुह्रिरे। अथवा त्रिभिः सवनैः सप्त धेनवः सप्तहोत्रा वा वषट्कारिणः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्रः। एतेषां वाचः दुह्यन्ते। अथवा धेनवः दुह्यन्ते सत्या माशिरम्। आश्रयणीयं मिश्रणं वा परमे प्रकृष्टे व्योमनि स्थाने यज्ञे वा। चत्वारि अत्यग्निष्टोम उक्थः षोड़शी अतिरात्रश्चतुर्थः। अथवा पृथिवी अन्तरिक्षं द्यौर्दिश इति। अथवा चत्वारो वेदाः। अथवा चत्वारो महर्त्विजः। अथवा चत्वारः समुद्राः। भुवनानि निर्णिजे चतुर्दश भुवनानि सप्त भूरादयो लोकाः सप्त पातालानि तान्यपि चारूणि चक्रे कृतवान्। केन प्रकारेण नयतः ऋतैः रतैः यज्ञैः सत्यैर्वा अवर्द्धत। अथवा तत् तस्मै सप्त धेनवः सप्त रश्मयः। दुदुह्रिरे। अथवा सप्ताश्वाः। अथवा सप्त पावकजिह्वाः। सप्त मातरो वा सप्त भूरादयो लोकाः। सप्त पातालानि सप्त सोमसंस्थाः सप्त समुद्राः सप्त द्वीपानि सप्त स्वराः। एता दुदुह्रिरे सप्त। आशिरम् उदकं परमे व्योमनि। चत्वारि अन्याः भुवनानि पृथिव्यादीनि चारूणि चक्रे। यत् ऋतैः यज्ञैः अवर्द्धतेत्यथवा त्रिः अस्मै सप्त धेनवः सप्त प्राणाः शीर्षण्या इति त्रिः उत्पत्ति-स्थिति-प्रलयेषु स सत्याम् अवितथाम् आशिर ज्ञानं चत्वारि भुवनानि जाग्रत् स्वप्न सुषुप्ति-तुरीयासु अद्वैतावस्थे नित्याम् तैजनैः अवर्द्धत विश्वा-नाय"—इति वि०।

२ १ १ २ ४ २ ३

(अपामीवम ॥) इन्द्रा । यसोमसुषुता३ःपा३रिस्र

५ २ १ २२ २ ४ ६२ १ ३ २२ १

व। अपा। मोवाभवतुरा३ज्ञा३सासह। माताइ।

२ ४ २२ ३ ५ २ १ २

रसस्यमत्सता३दा३याविनः। द्रवाइ। णास्वन्तइहस।

३ २ ४

तुवा३इन्दा५वा६५६ः॥ २५॥

२ १ २ ४ ५ ४ ५ २ ४

(वायोरभिदः॥) इन्द्रायसोमसुषुतःपर्यौ॥ होइस्रा

५ १ २ २ २ २ २ २ १२ २

वा। अपामोवाभवतुरक्षसा१सा३हा।. मातेरसस्यमत्स

२ २ २ २ ५ ३ ५ १ २ ३ २

तदया१वी३नो। द्रा२३४वा। णा२३४स्वा। ताइहसा

१ २ ४

३। द्दा२३। तुवा३इन्दा५वा६५६ः॥ २६॥ ६५

वेनोभार्गवऋषिः। हे "सोम!" त्वं "सुषुतः" सन् "इन्द्राय" तदर्थं "परिस्रव" परितो गच्छ रसं मुञ्च। "अमीवा" रोगः "रक्षसा सह" "मा ते रसस्य मत्सत दयाविनो द्रविणस्वन्त इह" "अप भवतु" अपगतो वियुक्तो भवतु "ते" तव "रसस्य" त्वांश रसं पीत्वा "मा मत्सत" मा मद्यन्तु। कः? "दयाविनः" दयं सत्या-नृतं तेन युक्ताः पापिन इत्यर्थः। किञ्च "इन्दवः" ते रसाः

अथ नवमी ।

१ २ ३ १ २ ३ २ ३ ३ २ ३
असावि सोमो अरुषो वृषा हरी

१ २ ३ २ ३ २ ३ १ २ ३ २
राजेव दस्मो अभिगा अचिक्रदत् ।

३ २ ३ ३ १ २ ३ १ २ ३ १ २
पुनानो वारमत्येष्यव्ययꣳ श्येनो

१ २ ३ १ २ ३ १ २
न योनिं घृतवन्तमासदत् ॥ ८ ॥ ९६ *

२ र १ २र १
(सामानि त्रीणि ॥) असाविसो । मो अरुषो २३४ ।

५ र ४ २र र १ २र १ ५ ४
वृषाहराइः । राजेवदा । स्मो अभिगा २३४: । अचिक्र

२ र १र २र १ ५ ४
दात् । पुनानोवा । रामतिया २३४इ । षिअव्ययाम् ।

२र र १ २ १ ४ ४
श्यनोनया । निङ्घृतवा २३ । तमा५सदात् । हो५इ ।

डा ॥ २७ ॥

"इह" अस्मिन्यज्ञे "द्रविणस्वन्तः" अस्माकं धनवन्त "सन्तु" भवन्तु † ॥ ८ ॥ ९५

---

* उ० ५,२,१३,१ = ऋ० ७,३,७,१ = ऊहे ५,२,६—८,१,२—१९,२,४—२३,२, १७—२३,२,१० = ऊह्ये १,२,८ ।

† 'रसवन्तो भवन्तु देवानां न तु राक्षसादीनाम्'—इति वि० ।

१ २ २ ३ २ ३ ५ २र १र २
आसावी२३४सो। मो अरु२३४षाः। वार्षाहराये

२ ३ ५ २ ३ ५ २र १
३:। राजिवा२३४दा। स्मोअभी२३४गाः। आचिक्रदा

१ ३ ५ २ ३ ५ २र १
२३त। पूनानो२३४वा। रामातो२३४ये। पोअव्यया

२ ३ ५ २ ३ ५ ३ २
२३म। श्येनोना२३४यो। निष्कर्त्ता२३४वा। तमा३।

१ ३ ५र र २ ५ १ १ १ १
सा२दा२३४औ होवा। दे३। दिवो२३४५॥ २८॥

४ ५र ४र ५र ४र ५र ४ र ५र ४र
असाविसोमोअरुषोवृषाह। राड्। राजिवदस्मो

५ ४ र ५ ४ ५ र ४र र ५ ४ ५र ४
अभिगाअचिक्र। दात्। पुनानोवारमत्येष्यव्य। याम्।

५र ४र र ५ ४ ३ २ १ १ ५र
श्येनोनयोनिष्कृत। वां। तमा२। सध२दा३३४औ

र २ १ १ १ १ १
होवा। ए३। दिवो२३४५॥ २९॥ ९६

भरद्वाजो वसु ऋषिः। "सोमः" "असावि" अभिपुतोऽभूत्। कीदृशः सोमः? "अरुषः" अरोचमानः* "वृषा" वर्षकः "हरिः"

---

* 'अरुषः आ रोचमान:'—इति वि०। "अरुषम"—इति रूपनामसु पञ्चदशं नैघण्टुकम् ३,७।

अथ दशमी।

२ ३ १ २ ३ १ २ ३ २ ३ १
प्रदेवमच्छामधुमन्त इन्दवो

१ २ २ ३ २ ३ ३ १ २
सिष्यदन्तगावआनधेनवः।

३ १ २ २ १ २ ३ १ २
बर्हिषदोवचनवन्तऊधभिः

३ १ २ ३ १ २ ३ १ २
परिस्रुतमुस्रियानिर्णिजन्धिरे॥ १०॥ ९७*

हरितवर्णः†। स च "राजेव" "दस्मः" दर्शनीयः सन् "गाः" उदकानि‡ "अभि" लक्ष्य "अचिक्रदत्" शब्दङ्करोति स्व-रस-निर्गम-समये। पश्चात् "पुनानः" पूयमानः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि"¶ हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम्§ "आसदत्" वसतीवरीष्वासीदतीत्यर्थः॥॥

"अत्येषि"-"पर्येति"—इति, "आसदत्"-"आसदम्"—इति च पाठः॥ ८॥ ९६

* ऋ० ७,२,१९,१।

† 'हरिः हरणशीलः'—इति वि०।

‡ इह साम स्वग्यम्।

¶ 'अत्येषि अत्येति व्यत्ययेन'—इति वि०।

§ "घृतम्"—इति उदकनामसु दशमं नैघण्टुकम् ११२।

॥ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

४ ५ २ १ २र १ २
(मरुताम्बेनु॥) प्रादे। वमच्छामधुम। न्त्रा२-
१ २ ३ ५ २ १र २र
इन्दवाः। आसिष्या२३४दा। तगावआ। नधा२इन
१ २ ३ ५ २ १र ५ र १
वाः। बर्हिषा२३४दाः। वचनावा२। नऊ२धभाइः।
२ ३ ५ २ १ र २
पारिस्रु२३४ताम्। उस्रियानिर्णिजन्धाइरायेर। धाइ
२ ५र र २ १ १ १ १ १
रा३४औहोवा। धा३इरा२३५इ॥ ३०॥ ९७

वत्सऋषिः*। "मधुमन्तः" मदकर-रस-युक्ताः "इन्दवः" सोमाः "देवं" द्योतमानं सोमात्मकम् इन्द्रम् "अच्छ" प्रति "प्रासिष्यदन्त" परिस्यन्दन्ते ग्रहादिषु † प्रचरन्ति। [स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम्] तत्र दृष्टान्तः। "गाव आ न धेनवः" पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति

---

* "वत्सप्रीः भालन्दनः"—इति ऋषि-नै०।

† यज्ञीयदेवानुद्दिश्यांशभोग्यस्थीनसोमा तदाधारत्वात्तदीयचतुर्घटादयोऽपि ग्रहा उच्यन्ते। ते च प्रातःसवने, पञ्चविंशति-सङ्ख्यका भवन्ति। तथाहि—१उपांशुः—२अन्तर्यामः—३ऐन्द्रवायवः—४मैत्रावरुणः—५आश्विनः—६शुक्रः—७मन्थी—८आग्रयणः—९उक्थ्यः—१०ध्रुवः—११-२३ऋतुग्रहाश्च वैश्वानरः—२४ऐन्द्राग्नः—२५वैश्वदेवश्चेति। माध्यन्दिनसवने चत्वारि—तत्र, मरुत्वतीयास्त्रयो माहेन्द्रश्च चतुर्थः। तृतीयसवने तु पञ्च, तद्यथ—१आदित्यः—२सावित्रः—३महावैश्वदेवः—४पात्नीवतः—५हारियोजनश्चेति।—इत्येव सङ्कलनया ग्रहास्त्रिंशदिति।

अथैकादशी ॥

१ २.३क२र ३ १ २ ३
अञ्जते व्यञ्जते समञ्जते

१ २. ३ २ ३क २र
क्रतुꣳ रिहन्ति मध्वाभ्यञ्जते।

१ २ ३ २.३ १ २ ३ १ २
सिन्धोरुच्छ्वासे पतयन्तमुक्षणꣳ

३ २ ३ २ ३ १ २
हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ११ ॥ ९८ *

२ १ २ १ २
(श्रागानि त्रीणि ॥) अञ्जताइ। वियञ्जताइ। सम

१ १ २र १ १ १
ञ्जाता२इ। क्रतुꣳरिहा। तोमधुवा। भियञ्जाता

तद्वत्। किञ्च। "बर्हिषदः" बर्हिषि सीदत। "वचनवन्तः" हम्भा-रवादि-शब्दवन्तः [उस्रियेति गोनाम †] तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः "परिस्रुत" परितः स्रवणशीलं "निर्णिजं" शुद्धं पयोभूतं सोमरसं "धिरे" दधिरे इन्द्रार्थं धारयन्ति ॥ १० ॥ ९७

---

* ऋ० ७,६,११,१ = क० ७,३,२०,३ = ऋक् १२,१,१०।

† "उस्रिया"—इति गोनामसु द्वतीयं नैघण्टुकम् २,११.।

२इ। सिन्धोरुच्छ्रा। सेपतया। तमुत्ताणा२म। हिर
ण्यपा। वा:शुमा। स्तुगुभ्णता३१उवा२३४५॥ ३१॥

अश्चा३हो। ते३होइ। वियञ्जते३सा३मञ्जताइ।
क्रतू३हाइ। रिहा३हो। तिमधुवा३भी३अञ्जताइ।
सिन्धो३हाइ। उच्छ्रा३हो। सेपतया३न्ता३मुत्ताणाम्।
हिरा३हो। ण्यपा३हो। वा:पशुम। स्तुगा३भ्णा५
ता६५६इ॥ ३२॥

हावाञ्जा। तार३४इ। वियञ्जतेसमञ्जते। एहिया।
एहिया३४। हाउक्रातूम्। रार३४इ। हन्तिमधुवाभि
यञ्जते। एहिया। एहिया३४। हाउसाइन्धोः। ऊ२
३४त्। श्वासेपतयन्तमुत्ताणाम्। एहिया। एहिया३४।

अथ द्वादशी।

३ १ १ २ १ २
पवित्रन्ते विततम्ब्रह्मणस्पते
३ १र २र ३ १ २ ३ १ २
प्रभुर्गात्राणि पर्येषि विश्वतः।

५ १ र ३र ४ ३ ४ ३ ४ ५ र १ २
हाउहाइरा। ण्या२३४। पावाःपप्रुमप्सुगृभ्णते। एहि
१ १ ३ २ ५ ४
या। एहिया३४। हाउ। वा५इ। डा॥ ३३॥ ९८

'अत्रिऋषिः*। सोमम् ऋत्विजः "अञ्जते" गोभिः तथा "व्यञ्जते" विविध मञ्जति "समञ्जते" सम्यगञ्जति। स्तुत्यर्थत्वादपुनरुक्तिः † तथा "क्रतु" बलकर्त्तारं "रिहन्ति" लिहन्ति आस्वादयन्ति देवाः तथा पुनः "मध्वा" मधुना गव्येनाभ्यञ्जते। तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्रासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पतॢ गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः] "उक्षणं" सेक्तारम् "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ‡ [पशुः पश्यतेरिति निरुक्तम्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ¶॥

"मध्वा"--"मधुना"—इति, "अप्सु"--"आप्सु"—इति च पाठः॥ ११॥ ९८

---

* "भौमः"—इति ऋषि-नै०।

‡ पुनरुक्तिदोषो नेति भावः।

† 'पशु सोमम्'—इति वि०।

¶ 'विनियोग उपदृश्ये प्रवर्ग्ये च'—इति वि०।

१२ ३२उ ३ १ २
अतप्ततनूर्न तदामोअश्नुते

३ २ ३१२ २३ १२ २२
शृतासइद्वहन्तःसन्तदाशत ॥ १२ ॥ ९९ *

॥ द्वितीय-दशति ॥

२१ १२ १ २ १ २ १
( अर्कपुष्पम् ॥ ) पवित्रन्ते विततम्ब्रह्मणस्पते३। ऊवे

१ २ २ २ १ २ २२ १ ०२
२३। २। होवा३हा३। हाइ। प्रभुर्गात्राणिपरियेषि

१ १ १२ २ २ १
विश्वता२३ः। ऊवे२३। २। होवा३हा३। हाइ। अत

२ २१ ऽ२ १२ ३ १ १ २ २ २
प्ततनूर्नतदा२मोअश्नुते३। ऊवे२३। २। होवा३हा३हा

१२२१ २ १ ऽ२ १ १
इ। शृतासइद्वहन्तःसन्तदा२शत। ऊवे२३। २। हो

२ २ २ ५२ २ २ १२२२ ऽ३ १२
वा३हा३। हा३४। औ३होवा। अर्कोदेवाना२म्परमेवि

ऽ२ ३ १ १ १ १
यो२मा२३४५न् ॥ ३४ ॥

३१ २२१ २१ २
( अर्कपुष्पोत्तरम् ॥ ). पवित्रन्तेविततम्ब्रह्मणस्पते३।

* उ० २,२,१६,१ = ऋ० ९,८३,१ = आरण्ये १,१,११–१,१,१२—ऊहे ७,२,१–७,२,३—१५,१,१ = ऊह्ये १,१,८—४,१,२।

१ २र १ र १र १ २र १
ऊवाइ। औहोवा२। प्रभुर्गात्राणिपरियेषिविश्वता२३:।
१ २र १ १ २ र१ ५र १र २ १
ऊवाइ। औहोवा२। अतप्ततनूर्नतदा२मोअश्नुते३। ऊ
२र १ १र २१ २ १ ५र
वाइ। औहोवा२। शृतासइद्वहन्तःसन्तदा२शत।
१ २र १ ३ ५र र २ १ २
ऊवाइ। औ। हो२। वा२३४। औहोवा। अर्कस्य
र १र २ १र ५र ३ १ १ १ १
देवाःपरमेवियो२मा२३४५न् ॥ ३५ ॥ ९९

॥ इति ग्रामेगेये षोड़शः प्रपाठकः ॥

पवित्रऋषिः*। हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन्! सोम! "ते" "पवित्र" शोभन मङ्ग "विततं" सर्वत्र विस्तृतम्। स "प्रभुः" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्येषि" परि गच्छसि। "विश्वतः" सर्वतः तव तत्पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्तगात्रः † "आमः" अपरिपक्वः "नाश्नुते" न व्याप्नोति। "शृतासः ‡ इत्" शृताएव परिपक्वाएव "वहन्तः" यागं निर्वहन्तः तत् पवित्रं "समाशत" व्याप्नुवन्ति ¶॥

---

* "आङ्गिरसः"—इति ऋषि-नि०।

† 'अतप्तशरीरः कृच्छ्रैरपि क्लिष्टैः दशापवित्रस्य'—इत्यादि वि०।

‡ 'शृतासः निष्पन्न-सोमाः'—इति वि०।

¶ 'व्याप्नुवन्ति द्रोणकलशम्'—इति वि०।

"सन्तदामत"-"ततसमासत"—इति पाठौ* ॥ ६ ॥ ९९

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ॥

॥ इति जागतम् ॥

---

इन्द्रमच्छेतिखण्डेऽस्मिन् ऋचो द्वादश संस्थिताः ।
सकला उष्णिहस्तत्र वक्ष्यन्ते ऋषयः पृथक् ॥

तत्र दशमे खण्डे—

सैषा प्रथमा ।

२ ३१ २ ३ २ ३ १र २र ३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।
३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे†जातासइन्दवःस्वर्विदः ॥ १ ॥ १००‡

५ २ १ २ ३क ५
(पदे ६ ॥) इन्द्रमच्छ । सुताः इमे । औचो२३४वा ।

---

* तप्तमुद्राधारिणां वैष्णवसम्प्रदाय-विशेषाणां नयेऽयमेव मन्त्रः शरीरे तप्त-चक्राद्यङ्कनस्य ; तथाच "अतप्ततनूः" शङ्खचक्रादिभिः न तप्ता तनूः यस्य स पुरुषः "आमः" अपरिपक्वः असंस्कृतः अतएवं "तत्" प्रसिद्धं कैवल्यं "न अश्नुते" इत्यर्थः । वस्तुतोऽस्य विनियोगो ज्योतिष्टोम-तृतीयेऽहनि ।

† "श्रुष्टी"—ह० ।

‡ उ० १,१,१७,१ = ऋ० ७,५,६,१ = ऊहे १,१,१०—२,६,७—६,१,१७—६,२,८—६,१,२०—१०,१,१६—१०,२,१—१२,२,१०—१३,१,१—१३,१,१०—१४,१,११—१४,१,१७ ।

१ २ १० २ ३र ५ २ १ २र १
वृषणंय। तूहरया। औहो२३४वा। प्रुष्टाइजाता।

२ ३ २ १ २ १ २ १
सइन्दवाः। सुववो२३इदा३४३ः। ओ२३४५इ। डा॥१॥

५ २ १ २ १ २ २ १
इन्द्रमच्छा। सुताइमा३इ। ताइ३माइ। वृ

२ १० १ २ २ र र २र १
षणंय। तूहरया२ः। हारा३याः। अष्टेजाता३सा

० १ २ २ १ २ ५र र
इन्दवा२ः। आइन्दा३वा३ः। सुवरा३४। औहोवा।

२ र १ १ १.१ १
विदोवौ३दा२३४५ः॥ २॥

४ ५ ४ २ १ २
(अनुपदे द्वे॥) इन्द्रम। इन्द्राम। अच्छा३हता

१ १ २ १० १
१इमे२। आइमे२। वृषणंय। तूहरया२ः। राया

र र ५र ० १ १ २
२ः। अष्टेजाता३साइन्दवा२ः। दावा२३ः। सुवरा

५र र २ १ ११११
३४। औहोवा। विदो३विदा२३४५ः॥ ३॥

३ ४ ३ ४ ३र ४ ३र ४ ५ २ २ १ ३
इन्द्रमच्छसुताइमेवृषणंयन्तुहा। हो३४३। रयआ

अथ द्वितीया।

१२ ३१ २ ३१ २ २१ २
प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव।
३१ ३ २ ३ १ २ ३१ २
द्युमन्तꣳ शुष्ममा भर स्वर्विदम् ॥ २ ॥ १०१ *

१ २ १ २ ३ ४ ५ २
अष्टाउवा। जाताउवा३४। सइन्दवःसुवा। हो।
१ २
विद्ओ२३४५इ। डा ॥ ४ ॥

२ १ २ ४ ५ १ २ ५
( पौष्कलम् ॥ इन्द्रमा३च्छसु। ताई२३४माइ।
२ १ २ १ २ ३ ५ २ १ र ०
वृषाणंया। तूर्वा२३४याः। अष्टाइजाता। सइ२
३ २ १ ३ १ १ १ १ ९
न्दा२३४५वाई५६ः। सुवर्विदा२३४५ः ॥ ५ ॥ १००

अग्निश्चाक्षुषऋषिः। "अष्टे" अष्टौ चिप्रं "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः † - "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "वृषणं" कामानां सेक्तार मिन्द्रम् "अच्छ यन्तु" अभि गच्छन्तु । १ ॥ १००

---

* ऋ० ७,५,६,४ = ऋक् ११,२,१।

† 'स्वर्विदः स्वर्गं लोकं विदन्ति'—इति वि०।

२ १र र
( ऐषिराणि पञ्च ॥ ) प्रधन्वासौहोइ। औ३होर२३४
५ २ १र २ र १र र २ ५
वा। मजागृविः। इन्द्रायेन्दौहोइ। औ३होर२३४वा।
१ २ १ र २ ५ १ १र
परिस्रव। द्युमन्तꣳशौहोइ। औ३होर२३४वा। श्वमा
२ १र २ ३
भर। सुवर्विदौहोइ। औ३होर२३४५वा६५६। ऊ२३
५
४पा ॥ ६ ॥

२ १र र २ १ २ र १ र १र
प्रधन्वासौहो। वा३हो। मजागृवी२ः। इन्द्राये
र २ १ २ १ १ र
न्दौहो। वा३होइ। परिस्रावा२। द्युमन्तꣳशौहो।
२ १ २ र १ १र २ १
वा३हो। श्वमाभारा२। सुवर्विदौहो। वा३हो२।
२ ५र र ३ ५
वा२३४औहोवा। ऊ२३४पा ॥ ७ ॥

२र १र २ १ र १र २ र १
औहौहोइ। प्रधन्वासो२। औहौहो। मजागृ
वी२ः। औहौहाइ। इन्द्रायाइन्दा२। औहौहोइ।
२ १ र १र २ १ र १र
परिस्रावा२। औहौहोइ। द्युमन्ताꣳशू२। औहौहो।

ष्ममाभारा२। औहौहोइ। सुवः। वा२इ। दा२३४। औहोवा। ऊ२३४पा ॥ ८ ॥

ऊवा२इ। ऊवा२इ। हुवा२३होयि। प्रधन्वासो२। मजागृवी२ः। इन्द्रायाइन्दा२। परिस्रावा२। द्युमन्ता२९ष्मु२। ष्ममाभारा२। सुववीइदा२म्। हुवा२इ। हुवा२इ। हुवा२३होर। वा२३४औहोवा। ऊ२३४पा ॥ ९ ॥

प्रधन्वा२३सोमजागृवीः। इन्द्रा२या२३४इन्दो। ओइ। पा३रा३इस्रा३वा। द्युमा२न्ता२३४९ष्मु। ओ। ष्ममा भा२३४५रा६५६। सुवर्विदा२३४५म् ॥ १० ॥ १०१

चक्षुर्मामवऋषिः। हे "सोम!" "जागृविः" जागरणशीलस्त्वं "प्रधन्व" प्रचर। हे "इन्दो" सोम! "इन्द्राय" "परि

अथ तृतीया ।

१ २ ३ १ २ ३ १ २ १ १ २
सखाय आ निषीदत पुनानाय प्रगायत ।
३ २ ३ १ र २ र ३ २
शिशुं न यज्ञैः परिभूषत श्रिये ॥ ३ ॥ १०२ *

२ ३र १ १ र
( शौक्तानि पञ्च ॥ ) सखा३या आ २ । निषीदता ।
र २ १ र २ र
पुनाना२३या । प्रगायता । शिशुन्ना२३या । यज्ञैःपरा
१ २ १
इभू२ । षताआ२३या३४३इ । ओ२३४५इ । डा ॥ ११ ॥
४ ५ ४ ५ २ ३ ५ १ ३ ५
साखायाआ । निषीदा२३४ता । पुना२ना२३४या ।
१ ३ ५र र ३ ५ २ १ २ १ २र ३
प्रा२गा२३४औहोवा । या२३४ता । शिशून्नया । यज्ञैःप
२ १ १ ३ ५र र २
रिभू२३ । षा२ता२३४औहोवा । श्रिये१ ॥ १२ ॥

स्रव" परितः पात्रेषु चर । किञ्च "द्युमन्तं" दीप्ति-युक्तम् † । "स्वर्विदं" सर्वस्य लम्भकं "शुष्म" शत्रूणां शोषकं बलम् ‡ "आभर" आहर ॥ २ ॥ १०१

* उ० ४,२,६,१ = ऋ०७,५,७,१ = ऊहे २,२,१—४,१,२—७,१,१८—७,१,१९—९,१,१८—१४,१,२५ ।

† "द्युमत्"—इति दीप्तिकर्मसु अन्तिमं नैघण्टुकम् १,१६ ।

‡ "शुष्मम्"—इति बलनामसु एकादशं नैघण्टुकम् २,९ ।

४ ५र ४र ५र ५ १ र १र र
सखायआनि । षीदाईता । पुनानायप्रगायाता ।

र १र २ १ २
शिशुन्नयज्ञैःपरा २इ । भूषा२३ता३ । आ२३या३४३इ ।

१
ओ२३४५इ । डा ॥ १३ ॥

५र र ४ ५र ४र ५र ५ १ र १र
ओहाइ । सखायआनि । षीदाईता । पुनानौहाइ ।

२र १र ५ ४ ५ ४ २र १ र २र १ र २
पुनानौहोयि३ । यापायापा । गायतौहोइ । गायतौहोयि३ ।

४ ५ ४ ५ २ १ र २ १ र २ ४ ५
शाइशू शाइशूम् । नयज्ञौहोइ । नयज्ञौहोयि३ । पारी ।

३ १ ५र र २ २र ३ २
पारा३४औहोवा । ए३ । भूषतश्रियेऽ१ ॥ १४ ॥

५ र ३ २ ३ ५ २ १ २ ३ ५
सखा । यआओ२३४वा । निषाइ । दाताओ२३४वा ।

१ र १र ५र १ २ ३ ५ १ र
पुनानायप्रगा२यत । शाइशाओ२३४वा । नुयज्ञैःपरि ।

२ १ २ ३ ५ २
भू३ । षाताओ२३४वा । श्रियेऽ१ ॥ १५ ॥ १०२

पर्वतनारदाहर्षी* । हे "सखायः" सखिभूताः ! "स्तोतारः"

* पर्वतो नेदः काश्यपिः, नारदश्च, शिखण्डी अप्सरसः इति ऋषि-नैगेय-लभ्यः ।

अथ चतुर्थी ।

१ २ ३ १ २ ३ २३ १ २
तं वः सखायो मंदाय पुनानमभिगायत ।
३ २ ३ १ २ ३ १ २
शिशुन्न हव्यैः स्वदयन्त गूर्त्तिभिः ॥ ४ ॥ १०३ *

(कार्णश्रवसानि त्रीणि ॥) ता२३४०वः । सा२३४
५ २र १ २ १ र २ १र २
खा । योमदा२३या । पूनानम । भिगाया२३ता ।
१ २ १ २ २र २ १ २ ३र २ १
शाइशुन्नह । व्यैः स्वदया२३ । तङ्गूर्त्तिभा३४३इ । ओ२
३४५इ । डा ॥ १६ ॥

ऋत्विजः "आ नि षीदत" स्तोतु मुपविशत । अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं "यज्ञैः" यजनीयैः हविर्भिः मिश्रितैः "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत । तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितरः † आभरणैरलङ्कुर्वन्ति तद्वत् ॥ ३ ॥ १०२

* उ० ४,१,१९,१ = ऋ० ५,८,१ = ऊहे ३,२,१२—२,१,१०—२,१,११—९,२, २०—१८,१,२ ।

† 'मातरः'—इति वि० ।

२ ३ ४ ५ २ ३ १ २ २ ५ १ र
ओइतंवःसखा। योम। दायाओ२३४वा। पुना

५ २ ३ ५ ३ १ ३ ५
नमभिगा३। आ। ओ२३४वा। यताओ२३४वा।

१ २ १ २ १र २ २ ३ ५ ३ २
शिशुन्नह। व्यैःस्वदया३। अ। ओ२३४वा। तगा

३ ५ ५
ओ२३४वा। तो२३४भीः॥ १७॥

५ र र ५ २ र १ ५र १
तंवःसखायोमदा६या। पुनानमभिगा२यत। शा

७ २ ४र ५ ३ १ १ ४ २
इशुन्नहा३। व्यैःस्व। दया३। ता२३गू२। ता२३४५इ

५
भो६हाइ॥ १८॥ १०३

पर्वतनारदादृषी। हे "सखायः!" ऋत्विजः "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं "त्वं" सोमम् "अभिगायत" अभिष्टुत। तमिमं सोमं "शिशुं न" शिशुमिवालङ्कारैः चीरादिभिश्चालङ्कुर्वन्ति तद्वत्। "हव्यैः" हविर्भिर्मिश्रयणैः "गूर्त्तिभिः" स्तुतिभिश्च *"स्वदयन्त" स्वादूकुरुत।

"हव्यैः"-"यज्ञैः"—इति पाठौ॥ ४॥ १०३

* गूर्त्तिभिरिति अर्चति-कर्मणो (नै०३,१४) गूर्धयतेः रूपमिदम् भाष्यकारस्य। 'गूर्त्तिभिः उद्यमाने रत्नैर्धनैर्वा'—इति वि०।

अथ पञ्चमी।

३ १र २र ३ १ २ ३ २ ३ २ ३ १ २
प्राणाशिशुर्महीनाᳬहिन्वन्नृतस्यदीधितिम्।

२ १ २ ३१ २३१२ ३२
विश्वापरिप्रियाभुवदधद्विता॥ ५॥ १०४*

४ ५ ३ ५ २ २
(वाचः सामनी द्वे ॥) प्राणा। शाऽ३४इशुः। महा

५ १ ३ ५ २ १ २ २
२३४इनाम्। हिन्वा२ना२३४त्ता। स्या३दा३धी३तीम्।

१ २र१ २३र २१ २ ३ २ १
वाइश्वापरि। प्रियाभुवा२३त्। अधद्विता३४३। ओ२३

४५इ। डा॥ १९॥

४ ५ ४ ५ १ १ ६ २
प्राणाप्राणा। शाइशु रः शाइशूरः। महा३१उवाये३।

१११ २ १ २ २
ना२३४५म्। हिन्वन्नात्तस्यदा३१उवाये३। धी२३४

५ १ र २ ५ २
तीम्। विश्वापारिप्रिया३१उवा२३। भू२३४वात्। अधी

१ २ १ ३ ५र र
२। द्वी२। उवाये३। दा२इता२३४औहोवा।

२ ५
ऊ३२३४पा॥ २०॥

* उ० २, २, १८, १ = ऋ० ७, ५, ४, १—कद्दे २, १, १२—४, १, २—७, २, १०—७, २, २१—९, १, १४—९, २, २—१२, १, ५—१५, २, ८—१६, २, ८।

(इन्द्रसामनी द्वे ॥) प्राणाशिशूः। महाऽ२इनाम्। औहोऽ३वा। हिन्वन्नतस्यदीधितिम्। वाइश्वाउवा। प्राराउवा। प्रिया२भुवत्। अधाउवा३। ए३। हिता१ ॥ २१ ॥

प्राणा। होऽ३इ। इयाहाइ। शाइशुमहाइ। ना२३म्। आउहाउ। होऽ३वा। हिन्वन्तस्यदीधिता२३म्। आउहाउ। होऽ३वा। विश्वापा। र्याउहाउ। होऽ३वा। प्रिया२३। भू२वा२३४औहोवा। अर्थहि ता१ ॥ २२ ॥

(मरुतां प्रेङ्खम् ॥) प्राणा। हहोइ। शा२३४इशूः। हहो३इ। महीना२३म्। होवा३होये३४। हिन्वन्। हहोइ। आ२३४र्ता। हहो३। स्यदीधिता२३इम्।

१ २ १ २ ५ र ३ ५ २ ५ २ २
होवा३होयि३४। विश्वा। हवाइ। पार३४री। हवा

२ १ २ १
३इ। प्रियाभूवार३न्। होवा३होये३। आ२३धा३।

२ ५
हा३४५इतोइहाइ॥ २३ ॥ १०४

त्रितऋषिः* : "प्राणा" यज्ञं कुर्वाणा इत्यर्थः †। "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् §। "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति। अपि च "द्विता" द्विधा भवति ||। दिवि पृथिव्यां च वर्त्तत इत्यर्थः। + ०

"प्राणा"-"क्राणा"—इति पाठः॥ ५ ॥ १०४

* "आप्त्यः"—इति ऋषि-नै०।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः—"गोभिः क्राणा अनूषत—गोभिः कुर्वाणा अस्तोषत"—इति ४,१९। सामवेदीय-पाठस्तु प्राणाइति अतएव 'प्राणभूताः'—इति विवरण-व्याख्यानम्।

‡ 'गवाम्'—इति वि०।

¶ 'शिशुः शंसनीयः—इति वि०।

§ 'व्याप्नुवन्'—इति वि०।

|| 'द्वैमवर्णा सोमदेवता एव'—इति वि०।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि०।

अथ षष्ठी।

१.२ ३ १ २ ३ २ ३ १ २ ३ १ २

पवस्वदेववीतयइन्दोधाराभिरोजसा।

२ ३ १ २

आकलशम्मधुमांत्सोमनःसदः ॥ ६ ॥ १०५ *

१ ३ २ ३ ५

(प्राजापत्ये द्वे ॥) पवस्वदाऽइ। ववीताऽ२३४याइ।

१ २ २ ३ २ ३ ५ १२

आइन्दोधाराऽ२। भिरोजाऽ२३४सा। आकालशाम्।

२ ३ ५ १ २२१ ४ ४

माधूमाऽ२३४०त्सो। मनएमानाऽ२३ः। सदाऽ५ए। होऽ५

इ। डा ॥ २४ ॥

५ २ १२ २ २ २

पवस्वदा। ववीतयाइ। इन्दोधाऽ२३राऽ३४। भिरो

५ ५ १ २ २ १ १ २ २

जसाऽ६ए। आकाऽ३हा। लाशाऽ२म। माधऽ३हाइ।

१ २ १ ५ ४ ५

मांत्सोऽ२३। मनोऽ२३४वा। साऽ५दोऽ५हाइ ॥ २५ ॥ १०५

मनुर्ऋषिः † । हे "इन्दो" सोम ! "देववीतये" देवानां भक्ष-

* उ० ५,२,१७,१=ऋ० ७,५,१०,५=जद्द५,२,१७—१६,२,१९—९,६,४—२४,१,१३।

† "आप्सवः"—इति ऋषिर्नै०।

अथ सप्तमी।

१ २ ३ २३ २र ३ २३ १ २
सोमःपुनानऊर्म्मिणाव्यंवारंविधावति।

१ २ ३ १र२र४ ३ १ २
अग्रे वाचःपवमानःकनिक्रदत्॥ ७॥१०६ *

५र २ र १ २
(सुज्ञाने द्वे॥) सोमःपुना। नऊर्मिणा। अव्यं

१ र १ २ र १ १
वारा२म। विधावताइ। अग्रेवाचा२ः। पव। मा२

३ ५र र १ २ र १ ३ १ १ ११
२ना२३४औहोवा। कनिक्रददे३पा२३४५॥ २६॥

५र २ र १ २ १ ३ ५र
सोमःपुना। नऊर्मिणावा३। औ२। वा२३४। औ

र १ र २र ३ १ १ २ १
होवा। अव्यंवारंविधावति। अग्रे३। होवा३। हो

गाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्मदीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेर्लिङ्रूपम् †॥ ६॥ १०५

---

* उ० ३,१,१८,१=ऋ० ७,५,१०,५=ऊहे २,२,१७—७,२,९—९,३,४—१५,१,११।

† 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

२. वा२३४ । औहोवा । वाचःपवमानः । कमा३ । होवा३ । हो२ ।ः वा२३४ । औहोवा । क्रा२३४दात् ॥२७॥

(द्यौते द्वे ॥) सोमःपुनानऊ । र्मिणा । अव्यवार- विधावा२३ती । अग्रे वाचाः । पवमानाः । का२निक्र । दा२३४५त् ॥ २८ ॥

सोमःपुना२नऊर्मिणा२३४ऐही । अव्यंवारंविधावता २३४ऐही । अग्रेवाचःपवमाना२३४ऐही । कानी । क्र दद३४ । हियाई३हा । होंपुइ । डा ॥ २९ ॥

(आतीषादीये द्वे ॥१) सोमःपुना । नऊ३र्मो२३४णा । अव्यंवारम् । विधावति । अग्रा३२इ । वा२३४चाः । पवा३२ । मा२३४नाः । कना३इक्रा५दा६५ईत् ॥ ३० ॥

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रपुनानास्ववेधसेसोमायवचउच्यते।

३ १र २र ३ १ २ ३ १ २
भृतिन्नभरामतिभिर्जुजोषते॥ ८॥ १०७ *

३र ४ ५ र २ ३ ४र ५ ५ १ र २
सोमःपुना। हो। नऊर्मिणा६ए। अव्यंवारविधा

र २ ३ ३ १ १ १ १ २ १ २
१वा२ती। अग्रेवा२३४५। चा२३४५ः। पवमा२३ना३ः।

१ २ ५र र २ ३ १ १ १ १
का२ना२३४औहोवा। क्रदद२३४५॥ ३१॥ १०६

अग्निर्ऋषिः †। "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति। कीदृशः? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः॥ ७॥ १०६

---

* ऋ० ७, ५, ६, १।

† "चाक्षुषः"—इति ऋषि-नि०।

‡ दाधर्त्ति दर्धर्त्तीत्यादिना ( पा० ७, ४, ६५ ) सिद्धम्।

¶ 'विनियोगोऽस्य चतुर्थऽहनि'—इति वि०।

• ( सामगानि चत्वारि ॥ ) प्रपुनार२३नायवेधसाइ। होइ। होइ। सोमायवचाउच्याता२इ। भृतिन्नभरा मतिभा२इः। जुजोषा२३ता३४३इ॥ ओ२३४५इ। डा ॥ ३२॥

प्रपुनानौहोऽ५यवेधमाइ। सोमाऔ३हो३४। यव चउच्यताइ। भृताऔ३हो३४। नभरामतिभाइः। जु जा३१उवा२३। षा२३४ते॥ ३३॥ १०७

द्वितो नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय † "वेधसे" कर्मणो विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिन्न" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उच्यते"—इति साम्न- ऋचः पाठः।

॥ ८ ॥ १०७

---

* "आप्त्यः"—इति ऋषि वि०

† 'सोमपानाय'—इति वि०

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः"—इति मेधाविनामसु पठं नैघण्टुकम् ३,१५।

अथ नवमी ।

३ १ २ ३ १ २

गोमन्न इन्दो अश्ववत्सुतः सुदक्षधनिव ।

१ २ ३ २. ३ २ ३ १ २

शुचिञ्च* वर्णमधिगोषुधारय ॥ ९ ॥ १०८ †

१ ५ २ ३ ४र ५ ५ १

गो४मन्नः । हाउ । इन्दो अश्ववा६हे । सुतःसुदक्ष

२ २ २ १ ३ २ ३ ४र र

धा१नी३वा । शुचिञ्चवा२३४५ । र्णमधिगो२३४ औहो

३ ५ २ १ २ ४ ५ ४

वा । षू२३४धा । रया । औ३होवा । हो५इ । डा ॥

॥ ३४ ॥ १०८

पर्वतनारदावृषी । हे "सुदक्ष" सुबल ! हे "इन्दो" सोम । "सुतः" अभिषुतस्त्वं "नःअस्माकम्"‡ "गोमत्" यज्ञ-साधन-गो-युक्तं धनं "धनिव" धन्व [वर्णविकारः ¶] गमय [धन्वतिर्गत्यर्थः §] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि ॥

---

* "ते"—इति ऋ० ।

† उ० ७,३,१०,१=वै० ७,५,८,४=ऋचे १२।१,१४—१७,१,२—१८,२,६ ।

‡ 'नः अस्मभ्यम्'—इति वि० ।

¶ "व्यत्ययोबहुलम् (३,४,९८)"—इति पाणिनी-सूत्रस्य सुप्तिङित्यादिवचनेनेत्यर्थः ।

§ नि० नै० २,१४,६४ ।

अथ दशमी।

३ १ २ ३ १ २ ३ १र २र
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत।
१ २ ३ १ २ ३ १ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९

४ ५ ३ ५ २ ३ ५
हावास्मा। भ्या२३४न्त्वा। वासुवी२३४दाम्।
६ ५ ३ १ ३ ५ ६ ५
आभा२इवा२३४णीः। अना ओ२३४वा। षा२३४ता।
१र २ र १ २ ३ २ १ २ र ३
गोभिष्टे व। र्णमभिवा२३। सयामसिह्वो२३४५इ। डा॥
॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धारय" "दीधरम्"—इति च छन्दोग-बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी। सोम! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणीः" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने ( अदा० प० ) ]। वयं "ते" तव "वर्णम्" आवरकं रसं "गोभिः" गो-विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

० ऋ० ९,५,९,४।

अथैकादशते ।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
पवतेहर्यतोहरिरतिह्वराᳫंसिरᳫंह्या ।

३क २र ३ १ २ ३ २ ३ १ २
अभ्यर्षस्तोतृभ्योवीरवद्यशः ॥ ११ ॥ ११०

५ र २ १र २
(यशाᳫंसि त्रीणि ॥) पपतेहा। र्यतोहरिः। औ

२ ३ ५ १ २ १ ५र १ २ र
३होइ। औरहोर३४वा। आतिह्वराᳫंसिरᳫंह्यिया।

३र २ ३ ५ २ १ ० र १ २र १
औहोइ। औरहोर३४वा। अभ्यर्षस्तोतृभ्योवा।

२ २ ३ ५ २ ३ ५र र
औ३होइ। औरहोर३४वा। रा२वा२३४औहोवा।

१ र १ ३ १ २ १ १
यशोयशा२३४५ः ॥ ३६ ॥

३ २ ४ ५र २ १र २र १ ५
पवा३। पवतेहा। र्यतोहरिः। औहोइ। औ३

३ ३र २ १ २ १ ५र १ २ र र १
होइ। औहोइ। आतिह्वराᳫंसिरᳫंह्यिया। औहो

५ २ ३र २ १ २ र १ २र १ २र
इ। औ३होइ। औहोइ। अभ्यर्षस्तोतृभ्योवा। औ

* उ० १.२,२२.२=ऋ० ०,५,११,३=ऊहे १,२,१६--६,२,१५--६,२,१६--८,२,२=ऊह्ये ६,१,१६।

१ ऽ २ ३र २ १ २ ५र र
होइ । औ३होइ । औहो३ । रा२वा२३४औहोवा ।
२ र १ २ १ १ १ १
यशोयशा२३४५ः ॥ ३७ ॥

३ ४ ५र ३ २ १
पवतेहर्यतः । हरी३ः । आ२३४ । तिह्वरांसिर ।
५ २ १ र ५ ३र १ १ २
हिया । अभ्यर्षा२३४ । स्तोट । भ्योवा३इ । रा२वा
५र र २ ५
२३४औहोवा । या२३४शाः ॥ ३८ ॥ ११०

अग्निश्चाक्षुष ऋषिः । "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्या" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति । अथ प्रत्यक्षस्तुतिः—हे सोम ! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः ‡ ।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ ॥ ११ ॥ ११०

* 'हरिभिर्यष्टा'—इति वि० ।

† "सुपांसुलुक् (७,१,३९)"—इत्यादिनेति भावः ।

‡ 'विनियोगोऽस्य प्रथमेऽहनि'—इति वि० ।

अथ द्वादशी ।

३ १ २ ३ २ ३ १ २ ३ १ २

परिकोशम्मधुश्चुतꣳसोमः पुनानोअर्षति ।

३ २उ ३ १ २ ३ १ २

अभिवाणीऋषीणाꣳसप्ता* नूषत ॥ १२ ॥ १११ †

॥ तृतीय-दशति ॥

२ १ २ ४ ५ १र

( भारद्वाजम् ॥ ) परिकोशम्मधुश्चुताम् । सोमः

२ र २र २ ५ २ २ ३ २र १ २र

पुनानोअर्षति । होयि३ । अभिवार२३४५ । णीऋषी

र १ २ ३ ५ ३ ५

णाꣳस । प्तानाओ२३४वा । षार२३४ता ॥ ३८ ॥१११

॥ इति अर्द्धःप्रपाठकः ॥

द्वितऋषिः‡ । सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्यर्षति" परि गमयति । तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः ( प० ) ।

* "सप्त"—इति ऋ० ।

† ऋ० ७,५,६,३ ।

‡ "आप्त्यः"—इति ऋषि-नि० ।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति सप्तच्छन्दांसि ।

"सोमः पुनानो अर्षति" "अव्यये वारे अर्षति"—इति साम्न ऋचः पाठौ॥ १२ ॥ १११

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः॥

॥ इत्यौष्णिहम् ॥

स्वः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु।
"समुन्वे"-इति गायत्री यवमध्येति* केचन।
अक्षरव्यूहनादेषा ककुबेवेति केचन।
"एष धारया सुतः" प्रगाथः काकुभोऽन्तिमः।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे॥

तत्र एकादशे खण्डे—

सैषा प्रथमा।

१ २ ३ १ २ ३१ २ ३ १ २ ३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः।
१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः॥ १ ॥ ११२

* "विपरीतौ यवमध्या (पि० ३, ५८)" यदाद्यन्तौ पादौ लघ्वक्षरौ भवतः मध्यमश्च बह्वक्षरः तदा यवमध्येति कथ्यते।

१ उ० १,१,१६,७=ऋ० ९,५,१७,१ = ऊहे १,१,६—७,१,८—९,२,७—१०,१,५—१०,२,५—१३,१,४—१३,२,१८—१४,१,८।

४ ५ १
ओम्॥ (वासिष्ठम्॥) पावा। स्वमाधुमा। ताआ

३ ५ ३ ५ २र १ २र१ २
ओ२३४वा। ई२३४न्द्रा। यसोमक्रतुंवित्तमोमदाः।

१ २ १ ५ १ २र१ १२११
ओइ। माहाओ२३४वा। द्युत्तमोमदा२३४५ः॥ १॥

१ ५ ४ ५ ५ १
(सफम्॥) पा३४। वस्वम। धुमत्ता६मा:। आ

१ १ २ ४ २ २
इन्द्रा२। यसोमा२। क्रतुवाइत्ता३मो३। मां३दाः।

१ २ ४ २ ५
मद्दिद्युत्ताता३मो३। मा३४५दो६हाइ॥ २॥

४५ ४५र ४ १ र र २
पवस्वमधुमा। इहा। तमः। इन्द्रायसोमक्रतुवित्त

१र २ १ २ १ २ १ २ १र
मोमा२३दाः। इहा। महाइद्यु२३त्ता। इहा। तमो

२ १
मा२३दा३४३:। आ२३४५इ। डा॥ ३॥

४५ ४र ४ १
(वासिष्ठम्॥) पवस्वमा। ए५। धुमा। तमाः।

२र १ २ २ १ २
इन्द्रायसो३। हा। औ३हो। माक्रातवौ२३दा३।

अथ द्वितीया।

३ २ ३ २ ३२उ ३ १ २ ३ १ २ ३ २

अभि द्युम्नम्बृहद्यश इषस्पते दिदीहि देव देवयुम्।

१ र २र ३ १ २

विकोशम्मध्यमं युव ॥ २ ॥ ११३*

हा। औ३हो३४। तमो३४मदाः। महाये३। द्यू२हा २।

३४औहोवा। तमोमदा२३४५ः॥ ४॥

(सफम्॥) पवस्वा३मधु। मत्ता२३४माः। इन्द्रा

यसोमा २। क्रतुवाइत्ता३मो३। मा३२३४दाः। महा

इ। द्युत्ताता३मो३। मा३४५दोइहाइ॥ ५॥ ११२

गौरिवीतिः ऋषिः†। हे "सोम"! "मधुमत्तमः" अतिशयेन माधुर्योपितस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" क्षर। कीदृशः? "क्रतुवित्तमः" अत्यन्त प्रज्ञायाः कर्मणो वालम्भकः "महि" "महान्" मंहनीयो वा "द्युत्तमः" अत्यन्तदीप्तः "मदः" हृष्टः॥ १॥ ११२

* उ० ९,२,१७,१=ऋ० ७,५,१८,४ = ऊहे ३,१,२— ४.१ १—८.१.१३—१४.२ १४

† "शाक्तः"—इति ऋषि-नै०।

( ऐषिराणि चत्वारि ॥ ) अभाइ । द्यु म्नाइम्बृह्
द्यशः । इषाः । पतेदिदीहिदे३वा३देवयुम । विको ।
शम्म । ध्यमा३०यू५वा६५६ ॥ ६ ॥

अ । भ्यिद्यु म्नाम् । बृहाद्या१शा२ः । इषास्पता
इ । दीदीहा२३४इदे । वदाइवा२३४यूम् । विकौवा
ओ२३४वा । शम्मध्यभा३१उवा२३ । यू२३४वा ॥ ७ ॥

अभिद्यु म्नम्बृहत् । इहा । यशः । इषस्पतेदिदीहि
देवदेवा२३युम् । विकौहोवा३हाइ । शम्मा२ध्यमंयुव ।
इडा२३भा३४३ । ओ२३४५ । डा ॥ ८ ॥

अभिद्यु म्नम्बृ६हद्यशाः । इषस्पताइ । दिदीहिदा
इ । वादेवयूम् । विकोशम्मध्यमा२३ऌहोइ । यू२३४
वा । एहियाऌहा । होऌइ । डा ॥ ६ ॥ ११३

अथ तृतीया।

१० २ ३ १ २ . ३ . २ ३ १र २र ३ १ २. ३ १ २

आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।

३ १ २ ३ १ २

वनप्रक्षमुदप्रुतम्॥ ३॥ ११४

ऊर्ध्वसद्मा ऋषिः†। हे "इषस्पते" अन्नस्य पते! हे "देव" स्तोतव्य सोम! "देवकामं" त्वां वय मभिष्टुम इति शेषः। किञ्च। त्वं "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नम् अस्मभ्यम् "अभिदीदिहि" आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः [आमन्त्रितस्याविद्यमानत्वेन ‡ पादादित्वान्न निघातः¶] किञ्च "मध्यमम् §" अतरिक्षस्थितं "कोशं" मेघं ‖ "वि युव" वृष्ट्यर्थं गमय विश्लेषय +॥

"देवयुम्"-"देवयुः"—इति पाठौ॥ २॥ ११३

---

* उ० ६,२,६,१=ऋ०७,५,१८,१=ऊहे २,२,१—७,१,१७—१२,१,१२।

† "आङ्गिरसः"—इति ऋषि नै०।

‡ "आमन्त्रितं पूर्वमविद्यमानवत्"—इति पा० ७,१,३०।

¶ "आमन्त्रितस्य च (पा० ८,१,१९)"—इत्याष्टमिको निघातो न, अपितु "आमन्त्रितस्य च (पा०६,१,१९८)"—षाष्ठाद्युदात्तएवेति भावः।

§ 'मध्यमं मध्यमे सवने'—इति वि० माध्यन्दिने इति तस्यार्थः।

‖ "कोशम्"—इति मेघनामसु दि प्रथमं नैघण्टुकम् १,१०।

+ 'विनियोगोऽस्य पञ्चमेऽर्ह्नि'—इति वि०।

(कार्ण्यश्रवसानि त्रीणि॥) आसोतापा। रा२इ।
षा२३४औहोवा। चा२३४ता। अश्वन्नस्तोममप्रुरा२र
जस्तुरम्। ओये३। वना३। ओये। प्रश्रा३४।
औहोवा। उदप्रुता२३४५म्॥ १०॥

आसोतापा। रिषि। चता२। ऊ२। हा२इ।
ऊ२। अश्वन्नस्तोमम। प्रुरा२म्। ऊ२। हा२इ।
ऊ२। रज। स्तुरा२म्। ऊ२। हा२इ। ऊ२।
वन। प्रश्रा२म्। ऊ२। हा२इ। ऊ२। उद।
प्रुरता२३४औहोवा। ऊ२३४पा॥ ११॥

आसोतापा। रि। षाइ। चता। अश्वान्नस्तो।
मामप्रू२३४राम्। रजास्तू२३४राम्। वनोहाइ। प्रा
वा मुरदा। हुम्माये३। प्रू२३४ताम्॥ १२॥

५र र र र ५
(वाचःसामानि त्रीणि ॥) आसोतापारी६षिञ्चना।
१ २ ३ ५ १र २ १ ३र १
आश्वाओर२३४वा। नस्तोममप्तु रार२९रजस्तुरा२३म्।
१ २ ३ ५ २ १ २ १ २ १.२ १र
द्वोइ। वानाओर२३४वा। प्रत्नमुदप्र ता२३४म्॥ १३॥
३र २ ३र ४र ५ १र ७ १
आसो३४औद्वोवा। तापराइषिञ्चाता२। आश्व-
२ र १ ७ १ २ ३ ५ ४
न्नस्तो। मामप्तूरा२म्। रजास्तू२३४राम्। वनौ
१ २
द्वाइ। प्रात्नमुदा३१उवा२३। प्रू२३४ताम्॥ १४॥
३र ४र ५र २ ३ ४ ५ १ २ र
आसोतापा। द्वो। रिषिञ्चता३५ए। आश्वन्नस्तो
१ ७ १ २ १ ७ १
मामप्तूरा२म्। राजस्तु रम्। वानप्राश्वा२३म्। ऊ
४ २ ५
२३दा३। प्र३४५तो६इवाइ॥ १५॥

ऋजिश्वा ऋषिः*। हे ऋत्विजः! "आ सोत" सोम मभिषुत [षुञ् अभिषवे (स्वा०उ०) लोटि छान्दसो विकरणस्य लुक्†

* "भारद्वाजः"—इति ऋषि-नि०।

† "सुपांसुलुक् (३.७,३९)"—इत्यादिनेति भावः।

अथ चतुर्थी।

३ २ ३ १ २ २. १ २ ३ १ २ ३ १ २ ३ १ २

एतमुत्यम्मदच्युतं सहस्रधारं वृषमं दिवोदुहम्।

३ १ २ ३ १ २

विश्वावसूनिबिभ्रतम्॥ ४॥ ११५ *

४ ५ १ ७

(कौलमलबर्हिषे द्वे॥) एताम्। ऊत्याम्। मदा

३ ५ २ १ २ १ २ १

२च्यु२३४ताम्। सहास्रधा। रांवृषभा३म्। दिवो

"तमनप्तमथनाश्च (पा०७,१,१४५)"—इति तस्य तबादेशः] किंच। "परि षिञ्चत" परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्व मिव वेगिनम्। "स्तोमं" स्तोतव्यं "अप्तुरम्" † अन्तरिक्षस्थितानामुदकानां प्रेरकं "रजस्तुरं" तेजसां वा प्रेरकम्। "वनंप्रक्षम्" उदकैः सम्पृक्तम्। यद्वा। काष्ठेषु पात्रेषु क्षारकं प्रकीर्णम् "उदप्रुतम्" उदकं गच्छन्तं प्लवमानं सोमम् अभिषुत अभिषिञ्चत॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति साम्न ऋचः पाठौ॥ ३॥ ११४

* ऋ० ७,५,१८,१।

† 'तरति तम्'—इति वि०।

‡ 'विनियोगोऽस्य तृतीयेऽह्नि'—इति वि०।

२ ५ १ ४
२हुँ२३४हाम् । विश्वा२हौ१इ । हौइ । वा२३हुइ ।

१ २ ५र र २ ५
ना२इवा२३४औहोवा । आ२३४ताम् ॥ १६ ॥

४ ५ ४ ५ २ ५
एतामृत्याम् । मदा३१ओवा२३ । च्यु२३४ताम् ।

११ २र १ २र१ ३ ४ ५ ४ ५ २
सहस्रधारवृषभन्दिवोदुहा२३म् । वाइश्वावाह । निवा

२ ५
३१ओवाये३ । आ२३४ताम् ॥ १७ ॥

५र ४ ५ ४ ४ १
(अङ्कः ॥) एतमुत्यम् । ए५ । मदा । च्युताम् ।

३ २ १र २ १ १
सहस्रधारंवृषभंदिवोदू२३हाम् । वाइश्वा२वाह२३ ।

४ ५
निवो२३४वा । आपुता६हाइ ॥ १८ ॥

५र ४ ५ ४
(कौल्मलबर्हिषाणि त्रीणि ॥) एतमुत्यम् । ओ

५ ४ ५ ४ २ ३ ५
हाइ । मदच्युतम् । ओहाइ । साहस्रा२३४धा ।

२ २ ५ २ र २ ५ १
२वार्षा२३४भाम् । दिवोदुहमे२३४हाइ । विश्वा२हा

१इ। वा२३ह्व३। ना२इबा२३४औहोवा। आ२३४
ताम्॥ १९॥

एतामुत्यम्मदाच्युतामं। साहस्रधा। रांवृषाभा-
२म्। दिवो२। दुहमोइ। विश्वावसूनिबा२३होइ।
आतमा३१उवा२३। ऊ२३४पा॥ २०॥

एता३४म्। उत्यम्मदा। च्यूताम्। सहस्रधार२
व्। षभम्। दिवो२३१२३। दू२३४हाम्। विश्वा
वसनिबा३ओये३। आ२३४ताम्। एहिया६हा। होपुइ।
डा॥ २१॥ ११५

कृतयशा ऋषिः*। "दिवः" देवान् कामयमाना ऋत्विजः†।

* "आङ्गिरसः"—इति ऋषि नै०।

† 'दिवो दुहम्—दिव आहृत्य इमं लोकं मुदकेन पूरयति'—इति वि०

अथ पञ्चमी।

१ २ ३ १र २र ३ २ १ २ २ १ २र

ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।

२ २ १ २ ३ २

सोमोयःसुक्षितीनाम्॥ ५ ॥ १२६ *

४ ५ १र र २ १

(दीर्घम्॥) साहु। न्वेयोवहु२३नाम्। योरा

र र १

२यामा२। नेतायइडा२३नाम्। सो२३माः। यः

२ १ ५ ५

क्षिता२३४इनोईहाइ॥ २२॥

"एतं" "त्यम्" सोममेव "दुहम्" अदुहन्। दुहेर्लिङि रूपम्†] दुहन्ति स्म [छान्दसो नकारस्य मकारः‡]। "ग्रावाणो वत्सा ऋत्विजो दुहन्तीति" तैत्तिरीयकब्राह्मणम्]. कीदृशं सोमम्? "मदच्युतं" मदस्य प्रेरकं "सहस्रधारं" बहुधारम्. "वृषभं" कामानां वर्षकं "विश्वा" सर्वाणि "वसूनि" धनानि "बिभ्रतं" धारयन्तम्॥

"दिवो दुहम्"—इति, "दिवं दुहम्"—इति पाठौ॥ ४ ॥११५

* उ० ४,१,१८,१=ऋ० ७,५,११,२=ऐ० ३,२,२—२७,१,१४।

† "दुह प्रपूरणे"—अदा० प०।

‡ "व्यत्ययो बहुलम् (पा०३,१,८५)"—इत्यनेनेति भावः।

(*लोमसाम)॥ ससुहाउ। न्वे योवहूना२३४५ हाउ। योरा२यामा२। नेताय:। इडाना२३४हा उ। सोमोय:ह३हाउ। चितीनाम्। औ२३हो वा। हो५इ। डा॥२३॥

सोमसामानि त्रीणि॥) स:। स्वेसाहू। न्वेयो वसा३१उवा२३। नाऽ२३४५म्। योरा२यामा२नेताय इडा२ना३म्। सोमोवाओ२३४वा। य:सुचिता३१उ वाये३। ना२३४५म्॥२४॥

ससुन्वे२३योवहूनाम्। योरायाऽमा२३नै। ताय इडा२३४५ना६५६म्। सोमो२य:सुचितीनाम्। सो मा२३४५:॥२५॥

ससुन्वयाः। एवाहू। नायोरा१या२३मा। नेता

अथ षष्ठी ।

२ १ २ २ १ २ ३ १ २ ३ १ २

त्वꣳ ह्या३ङ्ग* दैव्य† म्पवमानजनिमानिद्युमत्तमः ।

३ १ २ ३ १ २

अमृतत्वायघोषयन् ॥ ६ ॥ ११८ ‡

१ २ ३२ २ १ २ १

यइडा२३ना३४म् । सोमां३ः । यःसुचि । ता२३४५इ ।

३ १ १ १ १

ना२३४५म् ॥ २६ ॥ ११६

ऋणवऋषिः¶ । "यः" "सः" "सोमः" "सुन्वे" अभिसुषुवे ऋत्विग्भिः § । यः सोमः "वसूनां" धनानां "आनेता" यश्च "रायो" [रान्ति प्रयच्छन्ति चौरादिकमिति] रायो गावस्तेषा मानेता विद्यते यश्च सोमः "सुचितीनां" शोभन-मनुष्याणाम् ॥ आनेता सोऽभिषुतोऽभूदिति + ॥ ५ ॥ ११६

---

* "ह्या२ङ्ग"—इति } ऋ० पाठौ ।
† "दैव्या"—इति च

‡ उ० ३,१,१०,१ = ऋ० ७,५,१०,३ = ऊह २,२,१६—५,१,१६—११,२,१८—१९, १,१२ ।

¶ "आङ्गिरसः"—इति ऋषिनि० ।

§ "सुन्वे सुतः"—इति वि० ।

‖ "चितयः"—इति मनुष्यनामसु षष्ठ नैघण्टुकम् २,३ ।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि० ।

५ २
(ग्रैतोषाणि चत्वारि ॥) त्वꣳह्यिया। गदाइवियूप
२ २ १ १ १ १
वमानजनिमानीइद्यूमा २। तामा २ः। आमा २त्ता
१ १ ५ ४ ५
त्वा२३। यघो२३४वा। पा५योईहाइ ॥ २७ ॥

५ २ १ २ १ २र १ २ २
त्वꣳह्यिया। गदाइविय। पवमान। होवा३हाइ।
५ २ २
जनिना२३नी३४। द्युम। ता३माः। अमा२३। ता
३ ५र र २ १ १ १ १ १
२त्वा२३४औहोवा। यघो३षया२३४५न ॥ २८ ॥

४ ५ ४ १ र र २ १
त्वꣳह्यङ्गदा। विय। पवमानजनिमानिद्युमत्ता२
२ १
३माः। अमात्तो२३त्वा३। यघो२३४वा। पा५यो६
५
हाइ ॥ २९ ॥

५ २ ४ ५ ४र ५ २ १ १ २ १ १
त्वꣳहो३अङ्गदैविया। पवमा २ना। जनिमा २ना
२ ५ २ २ १ २ २ २ १
ये३४। द्युम। ता३माः। अमात्तो३त्वा३। यघो२
५ ४ ५
३४वा। पा५यो६हाइ ॥ ३० ॥ ११७

अथ सप्तमी ।

२१ २र ३२ ३१२ ११२
एषस्यधारयासुतोव्यावारेभिःपवतेमदिन्तमः ।
१२३ १२१२
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ११८ *

४ ५ १ ३ २
(गायत्रपार्श्वम् ॥) एषा: । स्याधारया२१उवा
५ १ २र १२र २ १ १ २ र
२३ । सु२३४ताः । अव्या२वारेभिःपवतेमदिन्तमः । क्री
१ २ ३ २ १ ४ १ ११११
डानू१मी२: । अपा३म् । इ२३वा३ । आइ्वा२३४५ ॥ ३१॥

शक्तिःऋषिः † । हे "पवमान" पूयमान सोम ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "दैव्यं" देवसम्बन्धीनि "जनिमानि" जन्मानि देवानित्यर्थः । जानासीति शेषः । तानभि लक्ष्य "अमृतत्वाय" तेषाम् अमरणाय "अङ्क" क्षिप्रं ‡ "घोषयन्" ऋत्विजो ग्रावाणोव शब्द मुदपादयन् उत्पादयन्ति ¶ [हि योगादनिघातः § ॥

"घोषयन्"-"घोषः"—इति पाठौ ॥ ‖ ॥ ६ ॥ ११७

---

* ऋ० ७,५,१७,५=ऊहे ४,१,११-१८,१,१ ।

† "वासिष्ठः"—इति ऋषि-नै० ।

‡ "अङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति"—इति यास्कः (निरु०नै०५,१७) ।

¶ 'घोषयन् सूयसे'—इति वि० ।

§ "यद्वितु परञ्छन्दसि"—इति पा० ८,१,५६ ।

‖ 'विनियोगोऽस्य ततीयेऽहनि'-इति वि० ।

४र ५ १ र २
(सन्तनि) ॥ एषाहाउ । स्याधारया३१उवा२३ ।
५ १ ऽर १र र २ र १ ३ ४र
हू२३४ताः । अव्या२वारेभिःपवतेमदिन्तमा२३ः । क्रीडन्
५ १ २ ५
हाउ । ऊर्मिरपा३१उवा२३ । ई२३४वा ॥—*

२ १र र २
(सोमसामानि चैव त्रीणि ॥) एषस्यधा । राया१
३ र २र १ २र ३ २ १
सुतार: । अव्यावाराइ । भाइःपवते । मदिन्तमाः ।
२र १ २ १ ४ र ५
क्रीडन्न२३र्मीः । आर२पा३म् । आ२३४५इवोईहाइ ॥३३॥
२ १ २ ४र ५र १ १र र
एषस्या३धारयासुताः । अव्याहो२इ । वारेभिःपव
र ७ १र २ ३ र
तेमादिन्तामा२ः । क्रीडा२न्हो१इ । ऊ२३र्मीः । अपा
२ १ २ ४ ५ ४
मिवा । औ३होवा । हो५इ । डा ॥ ३४ ॥

* एतस्यैव साम्नः परार्द्धं यउस्विथैत्यष्टमर्चो गानम् । अनयोः सप्तमाष्टमयोः ऋचोः प्रगाथो भवति । मीमांसादर्शनाधिकरणमालायां नवमाध्याय-द्वितीयपाद-षष्ठाधिकरणादौ तल्लक्षणादयोऽपि विचारिताः । अस्ति चात्रैव भाष्यकृतो भूमिकायां तदुल्लेखः समम्नात् (२५पृ०—३८पृ०) तेनानयोः त्र्यृचं सम्पद्यते, अतएतादृग्विमिश्र-मूलक-गान-दर्शनस्यायमेव हेतुः । तादृश-त्र्यृच-मूलक-गानानि चात्र ऊहे (४, १, ११—१८, २, १) स्फुटानि ।

४र　　　र४　　　२१र २र१　　　२ ३२१
एषस्यधा५रयासुताः । अव्यावाराइ । भिःपवता२

२३　　२　　१र　　र　　　१　　१　　५　　४
३इ । मदिन्तमाः । क्रीडन्नूर्मिरपोवा३ओ२३४वा । आ

५
५इवोई६हाइ ॥ ३५ ॥ ११८

॥ इति ग्रामे गेये सप्तदशः प्रपाठकः ॥

॥ इति गेयगानं सम्पूर्णम् ॥

उरुऋषिः* । "स्यः" सः "एषः" "सुतः" अभिषुतः सोमः "अव्या वारेभिः" अवेर्वालैः तेभ्यः पवित्रे "धारया" आत्मीयया "पवते" कलश मभिलक्ष्य चरति । कीदृशः ? "मदिन्तमः" मादयितृतमः । "अपामिव" उदकानाम् "ऊर्मिः" सङ्घात इव "क्रीडन्" इतस्ततः सङ्क्रीडमानः पवते † ॥

"अव्यावारेभिः"—"अव्योवारेभिः"—इति साम्न ऋचः पाठभेदः ॥ ७ ॥ ११८

* "आङ्गिरसः"—इति कर्पिनं० ।

† 'विनियोगोऽस्य सप्तमेऽहनि'—इति वि० ।

अथाष्टमी।

२१ २३ २३ २ २ १ २र ३ १ २र ३ १ २
यउस्रिया अपिया अन्तरश्मनि निर्गा अकृन्तदोजसा।
१ २ ३१ ३२३ २ ३१ २ २ १ २ १ ३१
अभिव्रजन्तत्निषे गव्यमश्व्यं वर्मीव धृष्णवारुज (ओ३म् वर्मी
२ ३१ २
वधृष्णवारुज*) ॥ ८॥ ११९ †

॥ चतुर्थ-दशति ॥

॥ इति षष्ठः प्रपाठकः समाप्तः ॥ ‡

॥ समाप्तञ्च छन्दआर्चिकम् ॥ ¶

१ ५र १ र ३ ४ ५ १
यउस्रियार अपिया अन्तरश्मनी२३। निर्गाहाउ। आ
२ ५ २१ २र १
कृन्तदा३१उवा२३। जा२३४सा। अभिव्रजन्तत्निषे गव्यम
३ ४ ५ १ २
श्वियार३म्। वर्मी हाउ। वाधृष्णवा३१उवा२३। रुर
५
३४जा॥ ३२§॥ ११९

* क० घ० पुस्तकयो रेव मध्यमपाठो न दृश्यते। वस्तुतः खण्डादि समाप्तावपि अन्त्याभ्यासो वैदिकशैली।

† ऋ०७,५,१८,१=ऋक्‌ ४,१,२—१८,१,१।

‡, ¶ भाष्यकृतः सायणस्य मत-विरुद्धएते परं स्वः सर्वमूलपुस्तकेषु।

§ इदं हि, पूर्व-प्रदर्शित 'सन्तनि'-नामकस्य 'एषाहाउ'—इत्येतस्य (१३८ पृ०) साम्नोऽन्तिमं दलम्। 'ततश्च न तु गेयगानादन्यदिति ध्येयम्। अतएव द्वात्रिंशदङ्का-न्वितमिति भ्रम'।

ऋजिश्वाऋषिः *। "यः" सोमः "उस्रियाः" उत्सरणशीलाः† "अपिव्याः" अप्याः [आपइत्यन्तरिक्षनाम,( नै० १,३,८)। अस्माद् "भवे छन्दसि ( पा० ४,४,११० )"—इति यत् ] अन्तरिक्षस्थाः। अहि-प्रभृतिभिरसुरैः ‡ अपाहृत्य निहिता "गाः" आपः ¶ "अश्मनि" मेघे § "अन्तः" मध्ये स्थिताइत्यर्थः। "ओजसा" बलेन "निरकृन्तत्" निरच्छिनत् निरगमयत् अन्तरिक्षाद्वृष्टि मकार्षीदित्यर्थः। स त्वम् असुरै रपहृतं "गव्यम्" गो-सम्बन्धि "अश्व्यम्" अश्वेषु भवं "व्रजं" समूहं "अभि तत्निषे" अभितो व्याप्नोति [ तनु विस्तारे—छान्दसे लिटि ‖ "तनिपत्योश्छन्दसि (पा० ६,४,९९)"—इत्युपधालोपः ]। किञ्च। हे "धृष्णो" शत्रु-धर्षणशील+ सोम! स त्वं "वर्मीव" कवचीव ÷ "आरुज" असुरान् जहि॥

* "भारद्वाजः"—इति ऋषि-नै०।

† 'उस्रियाः आदित्य-रश्मयः अनड्वाहो वा'—इति वि०। "उस्रियाः"—इति गोनामसु तृतीयं नैघण्टुकम् ( २, ११ )। "उस्राः"—इति तु रश्मिनामसु नवमं नैघण्टुकम् ( १, ५ )। "उस्रियेति गोनामोत्स्राविणोऽस्या भोगा उस्रेति च"—इति यास्कः ( निरु० नै० ४, १९ )।

‡ अहिरिति असुरइति चेमौ द्वाविव मेघपर्य्यायौ नै०१,१०,२७-२९।

¶ इद मानं मृग्यम्।

§ "अश्मा"—इति मेघनामसु अष्टमं नैघण्टुकम् १,१०।

‖ "छन्दसि लिट्"—इति पा० ३,२,१०५।

+ 'धृष्णो धारयन्'—इति वि०।

÷ 'वर्मी सवितः'—इति वि०।

"अपिन्न्याम्न्तरश्मनि"-"अप्याअन्तरश्मनः"—इति छन्दोग-बह्वृचानां पाठभेदः॥ ८॥ ११९

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने पञ्चमस्याध्यायस्यैकादशः खण्डः॥ ११॥

॥ इति काकुभं समाप्तम्॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ ५॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्तः॥ ५॥

॥ सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम्॥

॥ इति तृतीयं पर्व॥

ॐ नमः सामवेदाय ।

# अथ षष्ठोऽध्याय आरभ्यते ॥



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

आरण्यकाभिधः* षष्ठोऽध्यायो व्याक्रियतेऽधुना† ॥ २ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात् ।
ऋषिश्छन्दो दैवतञ्च तत्र तत्राभिदध्महे ॥ ३ ॥

तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः ।
द्वितीयस्या वसिष्ठः स्यात्तृतीयाया ऋषिः स्मृतः ॥ ४ ॥
वामदेव स्ततश्छन्दो बृहती त्रिष्टुबेव च ।
गायत्रीति क्रमादिन्द्रो भवेत्त्रिसृषु देवता ॥ ५ ॥

---

* "अरण्यान्मनुष्ये" (४, २, १२९ पा० ) । अत्यल्पमिदमुच्यत मनुष्यइति (प्र०)। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् (का०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती (प०)। वा गोमयेषु (का०)। वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः आरण्या गोमयाः (प०)।

† अथ आर्च्चिक-ग्रन्था इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-प्रवादानुगताः पुस्तकाद्यन्त-समीचीनोपलब्धयश्च। तथाच षडध्यायात्मकश्छन्दो नाम एकः, अपरो

तत्र प्रथम-खण्डे—

सैषा प्रथमा ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रंज्येष्ठन्नआभरओजिष्ठम्पुपुरिश्रवः

१र २र ३ १ २ ३ १र १२र
यद्दिधृक्षेमवज्रहस्तरोदसीउभेसुशिप्रपप्राः ॥ १ ॥ १ *

२र २र र र र २ २र
† हाउ । ३ । औहोइन्द्रंज्येष्ठन्नआभराइए । हाउ ।

१र १ २ र१२ २र र र १ २
३ । औहो२ । ओ२ । जिष्ठम्पूपारा । औहोवाश्रावाः ।

२र १र १ २ र १ २
हाउ । ३ । औहो२ । या२त् । दिधृक्षेमाव । ज्र

२र र र र १ २ २र १र
हस्त । औहोवारोदासी । हाउ । ३ । औहो२ ।

१ १र १ २ २र र र १ २ २र
ओ२ । भेसुशाइप्रा । औहोवापाप्राः । हाउ । ३ ।

१र १ २ २ २ १
औहो२ । आ२ । उऊवा३हाउ । वा३ । हस ॥२४॥१ ‡

·नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् षष्ठोऽध्यायैकात्मकः आरण्यक इति व्यवहृतः । सायण-मते तु नैवम् । अयं हि पश्चोपविभागैरेवं छन्दोग्रन्थं परिसमाप्य तस्यैव षष्ठोपभाग एष इति मन्यते ।

* ऋ० ४,७,१७,५ । † "नारद्यसर्वम्"—इति षा० ब्रा० ३,२,९ ।

‡ आ० पा० १प० १, १, २४ ।

हे "इन्द्र"!* "ज्येष्ठं" प्रशस्यतमम् "ओजिष्ठम्" अतिशयेन बलकरम् "पुपुरि" पूरकं "अवः" अन्नं "नः" अस्मभ्यम् "आभर" आहर प्रयच्छ। हे "वज्रहस्त" वज्रबाहो!† हे "सुशिप्र" शोभन-हनुक! एवम्भूत! हे "इन्द्र"‡ "यत्" "अन्नं" "दिधृक्षेम" धारयितु मिच्छेम यच्चान्नं इमे परिदृश्यमाने "उभे" "रोदसी" द्यावापृथिव्यौ "आ पप्राः" आपूरयसि। तदन्न माहरेत्यन्वयः।

"येनेमे चित्रवज्रहस्त"—इति बह्वृचानां पाठः॥ १॥ १

---

* "इन्द्रतेर्वैश्वर्य्य-कर्म्मणः"—इति नैरुक्तम् (३का० १०अ० ८ख०) ईश्वरस्यायमिति तद्भाष्यम्।

† "अथाकारचिन्तनन्देवतानां। पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानानि। अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू यत् संगृभ्णा मघवन् काशिरित्ते'। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्या मिन्द्र याहि कल्याणीर्जाया सुरणं गृहे ते'। अथापि पौरुषविधिकैः कर्मभिः-'अद्धीन्द्र पिब च प्रस्थितस्य आश्रुत्कर्ण श्रुधी हवम्'॥६॥ अपुरुषविधाः स्युरित्यपरमपि तुयद्दृश्यतेऽपुरुषविधन्तद्यथाग्निर्व्वायुरादित्यः पृथिवी चन्द्रमा इति। यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभि क्रन्दन्ति हरितेभिरासभिरिति ग्रावस्तुतिर्य्यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धुरश्विन मिति नदी-स्तुतिर्यथो एतत् पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित् पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैषचाख्यानसमयः॥ ७॥"—इति निरु० दै०।

‡ "शिप्रे हनु नासिके वा"—इति निरु० नै० ६,१७।

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १र २र ३र २ १ २ ३ १ २
इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपंयदस्य।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ २
ततोददातिदाशुषेवसूनिचोदद्राधउपस्तुतश्चिदर्वाक्॥२॥२

१ २ २र १ ३ १ २ २ २
* हावीन्द्राः। राजा। जगतः। चर्षणीनाम्। नाम्।
२र १र २र १र २र १र
२। नाओइनम्। ३। नाहोइनम्। ३। हावीहो
२ ३ १ २ १ १ २ २
हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या। २।
२र १र २र १र १र २र १र
स्याओइनम्। ३। स्याहोइनम्। ३। औहोहाविहो २।
२ १र २ १र २ र
ततोददा। तोइदाशु। षाइवसूनी। नी। २।
२र १र २र १र २र १र २
नाओइनम्। ३। नाहोइनम्। ३। हावीहोहाउ।
२र १ र २ १ २ २ २र
चोदद्राधाः। उपस्तु। तश्चिदर्वा। र्वा। २। र्वा
१र २र १र १र २र १र
ओइनम्। ३। र्वाहोइनम्। ३। औहोहावीहो
३ १ ११ १
३। हाउवा३। ई२३४५:॥८†॥

* "इन्द्रस्याकौल्वे" — इति आ० ब्रा० ३,२,१७।
† आ० गा० १प्र० १,८९।

१ १ २र१ २१ २ र २
इन्द्राहाउ। राजा। जगतः। चर्षणीनाम्। नाम्।
१र र १र र २र १र २
२। नोवा। ३। नोवाहाइ। ३। हाओ२। हा
२ २ १ २ १ र २ २
३हाउ। अधिक्षमा। विश्वरू। पंयर्दस्या। स्या।
१र र १र र २र २र २ १
२। स्योवा। ३। स्योवाहाइ। ३ हाओ२। हा३हा
२ १र २ १र १ र २
उं। ततोददा। ती३दाशु। षाइषहजी। नी। २।
१र र १र र २र २र २ २
नोवा। ३। नोवाहाइ। ३। हाओ२। हा३हाउ।
२र १ र २ १ १ २ १र
चोद्रद्राधाः। उपस्तु। तश्चिद्वर्वा। वा। २। वों
र १र र १र २र २ १
वा। ३। वोंवाहाइ। ३। हाओ३। हा३हाउ।
२ ३ १ ११ १
वा३। ई२३४५। ॥ १०* ॥ २

यः "इन्द्रः" "जगतः" जङ्गमस्य पश्वादेः यतो "राजा" ईश्वरो भवति। चर्षणीनां मनुष्याणां च † राजा भवति। किञ्च "अधि" क्षमा [ सप्तम्येकवचनस्य लुक् ‡ ] क्षमायां ¶ "विश्व-

---

* ग्रा० गा० १,१,१०।

† "चर्षणयः"—इति मनुष्य-नामसु पठितं नैघण्टुकम् २, ३

‡ "सुपां सुलुक् (पा० ७, १, ३९ )"—इत्यादिना।

¶ "क्षमा"—इति पृथिवी-नामसु पठितं नैघण्टुकम् १, १।

अथ तृतीया।

१ ३ २ ३ २ ३ १ २ ३ २उ ३ २३क २र
यस्येदमारजोयुजस्तुजेजनेवनꣳस्वः।
१ २ ३ १ २ ३ २
इन्द्रस्यरन्त्यम्बृहत्॥ ३॥ ३

१ २ २ १ २ २ २१र २
* हाउयास्या। इदमारजोयूऽजा२ः। तुजेजनेव
२ १ २ २
नाꣳसूऽवा२ः। आइन्द्रस्या३४५रा६५६। तियं
१
बृहत् ॥ ११ † ॥

रूपं" "यत्" धन मस्ति "अस्य" तस्यापि राजा भवति। "ततो ददाति दाशुषे वसूनि" यजमानाय ‡ वसूनि धनानि ददाति। स इन्द्रः अस्माभिः "उपस्तुतं" सम्यक् स्तुतं "राधः" धनम् "अर्वाग्" अस्मदभिमुखं "चोदत्" प्रेरयतु।

"अधिचमा"--"अभिचमि"--इति, "विश्वरूपम्"--"विषुरूपम्"-इति, "उपस्तुतम्"—"उपस्तुतः"--इति च साम्न ऋचः पाठभेदः॥ २॥ २

* "अर्कशिरः"—इति आ० ब्रा० ३,२,१०।

† आ० गा०१प० १,-२,११।

‡ दाशुषे—इति दानकर्मणो दाशतेः ( नै० ३, २०, २ ) रूपम् "दाश्वान् साह्वान् मीढ्वांश्च( ८ ) १,१२"—इति सिद्धम्।

अथ चतुर्थी।

१.२ ३१२ ३१ २३ १र २र३१र २र३१ २
उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय।

१२ ३२३ १र २र ३२३ १२
अथादित्य व्रते वयन्तवानागसो अदितये स्याम॥ ४ ॥ ४ *

२र १र र २र १.२ १
हाउ। ३। आयुश्वस्तुज्योतिः। औहोवा। ई,

२ १ र२.१ २ १र
या। उदुत्तमं वरुणपाशमार३स्मात्। अवाधमं विमध्यमꣳ

२१ २ १र र२१ २ २र१र
श्रथा२३या। अथादित्यव्रते वयन्ता२३वा। अनागसो अ

"रजोयुजः" ज्योतिर्भिर्युक्तस्य (ज्योती रज उच्यत इति यास्कः ‡) अत्यन्ततेजस्विनः "यस्य" इन्द्रस्य "इदं" पुरोवर्ति सोमयुक्तं हविरस्ति तद्धविः "स्वः" स्वर्गं सर्वत्र वा "तुजे" दातरि ¶ "जने" यजमानविषये "वनः" यतो वननीयं सम्भजनीयं खलु। अतः "इन्द्रस्य" दानं "रत्यम्" अत्यन्त-रमणीयं "बृहत्" प्रभूतं भवति॥ ३ ॥ ३

* ऋ० १, २, १५, ५। † "क्रमणगोत्रमयोरक्तुः"—इति श्या० ब्रा०१,२,१०।

‡ "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्यु च्यन्ते। असृगहनी रजसी उच्येते। "रजांसि चित्रा विचरन्ति तन्यवः"—इत्यपि निगमो भवति"—इति निरु० नै० ४, १९।

¶ तुजे इति तुञ्जतेर्दानकर्मणो रूपम् नै० ३, २०, ९।

र २ १ २ २र १र र
दितयेसियाा२३मा३। हाउ। ३। आयुश्चक्षुर्ज्योतिः।

२र १ २ १ ३ ५र र ३ १ १ १
। ई२। या२३४। औहोवा। ई२३४५

॥ १३* ॥ ४

आद्ये ऋचौ चतुष्पादे ह्येकपादयुतान्तिमा।

शौनःशेपी गार्त्समदी वामदेवीति ताः क्रमात्।

वारुणी पावमानी च वैश्वदेवीति संस्मृताः॥

हे "वरुण!"† "उत्तमम्" उत्कृष्टं शिरसि बद्धं "पाशम्" "अस्मद्" अस्मभ्यम् "उच्छ्रथाय" उत्कृष्टं शिथिलं कुरु। "अधमं" निकृष्टं पादेऽवस्थितं पाशम् "अव श्रथाय" अवाधस्तात् शिथिलीकुरु। "मध्यमं" नाभिदेशगतं पाशं "विश्रथाय" वियुज्य शिथिलीकुरु। "अथ" अनन्तरं हे "आदित्य" अदितेः‡ पुत्र!

* आ० गा० १५४८१, २, १२।

† "दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि। अतूर्त्त पन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋक् १०म० ६, ४, ४)"—इति मन्त्रलिङ्गात्—"अहोरात्रे मित्रावरुणौ (३का० ११अ० २३ख०)"—नैरुक्तभाष्याच्च मित्रशब्देन दिवा, वरुण-शब्देन च रात्रिः सुग्रहः। "वरुणः वृणोतीति सतः (३का० १०अ०२ख०)"—इति व्युत्पादनात् सर्वेषां घटपटादीनां तमोरूपेण आवरकत्व।

‡ "अदितिरदीना॰ * * 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'—इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा"—इति नैरुक्तम् २का० ४अ० २२-२३ख०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादि लभ्यः।

अथ दशमी।

१ २ ३ १ २ ३ १र २र ३ २
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती।
२ ३ १ २ ३ १ २ ३ १ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम्॥
२ २ २ ३ २ ३ १ २ ३ १ २
यशस्व३ःस्याः सꣳसदोऽहम्प्रवदितास्याम्॥१०॥ २६

२ऽ १र ३र १र र २ १र २ऽ
* हाउ३वा। यशोमाद्यावापृथिवी। हाउ३वा।
१ र २र २र २ऽ २ र २
यशोमिन्द्रबृहस्पती। हाउ३वा। यशोभगस्यविन्दतु।
२ र २र १ २ र २ऽ २
हाउ३वा। यशोमाप्रतिमुच्यताम्। हाउ३वा। यश
१ र २ १ २ऽ २ १ २ १र र
स्वियस्याःसꣳसदः। हाउ३वा। अहंप्रवदितास्याम्।
२ऽ १ २ १
हाउ३वा। अस्वमिष्टयि३हस्॥१२†॥२६

चीचं" न ब्रवीमि अपितु समीचीनानीति। अतः, "वः" युष्माकम् "अन्तमाः" अन्तिकतमाः सन्तो वयं "सुम्नेष्वित्" युष्माभि-र्दत्तेषु सुखेष्वेव‡ वर्तमानाः "मदेम" मोदेम॥

"यज्ञम्"—"यज्ञियाः"—इति पाठौ॥ ८॥ २५

* "यशः"—इति श०ब्रा०३,२,१३।

† आ०गा०४प०४,२,१२।

‡ "सुम्नम्"—इति सुखनामसु षोडशं नैघण्टुकम् ३,६।

अथ एकादशी।

१ २ ३ २ ३क २र ३ १ २ ३ १ २ ३ १ २ ३१ २ ३ २
इन्द्रस्यनुवीर्य्याणिप्रवोचंयानिचकारप्रथमानिवज्री।

२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अहन्नहिमन्वपस्ततर्द प्रवक्षणाअभिनत्पर्वतानाम्॥११॥२७

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवता।

"द्यावापृथिवी" द्यावापृथिव्योः "यशः" "मा" स्तोतारम् "आविन्दतु" लभतां प्राप्नोत्वित्यर्थः। किञ्च, "इन्द्रबृहस्पती" इन्द्राबृहस्पत्योः † "यशः" "मा" मां विन्दतु। किञ्च, "भगस्य" आदित्यस्य ‡ "यशः" "मा" मां विन्दतु। बहुलेन यशसा यशोमया "मा प्रतिमुच्यताम्" न प्रमुच्यताम्। "यशस्त्रस्याः" अस्याः मम "संसदः" समूहस्य "यशः" न प्रमुच्यताम्। "अहं" प्रवदिता सर्वत्र प्रवक्ता "स्याम्" भूयासम्॥ १०॥ २६

---

* ऋ०१,२,३६,१।

† "तिस्र एव देवता इत्युक्तं पुरस्तात्तासां भक्ति-साहचर्यं व्याख्यास्यामः।... "अथैतानीन्द्रभक्तीनि।...। अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूष बृहस्पतिः ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः। अथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च पूषा वातेन च पर्जन्यः"—इति निरु० दै०.१,१०।

‡ "भगो व्याख्यातः तस्य कालः प्रागुत्सर्पणात्"—इत्यादि निरु० दै० ६,१३—१४ "जारं आ भगम्। जार इव भगं मादित्योऽत्र जार उच्यते"—इत्यादि निरु० नै० ३,१६

* वृत्रहत्यायचोइ। ३। अधृष्णवेचोइ। ३। अपूरवे चोइ। २। अपूरावा२इ। पृथिवीञ्चाचोइ। क्विरत्तयाचोइ। २। विवर्त्ताया२। अन्तरिक्षञ्चोइ। ३। सुधारया चोइ। २। सुधाराया२। दिववेपाचोइ। ३। अवेप्रयोचोइ। २। अवपाया२ः। चोइ। २। ऊवे२। चा३१उवा२। इन्द्र२। २। इन्द्र। स्यनू। २। स्यनू३। आ उ। वा२। वीर्य्याणि। प्रवा। २। प्रवा३१उ। वा२३। चा२३४५म। यानी२। २। यामि। चका। २। चका३१ उ। वा२। रप्रथमा। निवा। २। निवा३१उ। वा२३। ज्री२३४५। अह२नं। २। अहन। अंहाइम। २। अहा३१उ। वा२। अन्वपः। तता। २। तता३१उ। वा २३। दा२३४५। प्रव२। २। प्रव। क्षणाः। २। क्षणा३१

* "वार्त्रघ्नम्"—इति आ० ब्रा० ३, २, १३।

उ। वा२। अभिनत्या। वंता। २। वंता३१उ। वा२३।

१ ११११ २ १२ २ १२
ना२३४५म्। वृत्रहत्यायहोइ। ३। अधष्णवेहोइ। ३।

२२१२ २२१ २ १२२
अपूरवेहोइ। २। अपूरावा२इ। पृथिवीञ्चाहोइ। ३।

२ १२ २ १ २१
विवर्त्तयाहोइ। २। विवर्त्तायां२। अन्तरिक्षंहोइ। ३।

२२ १२ २२१ २ १२२
सुधारयाहोइ। २। सुधरराया२। दिवंवेपाहोइ। ३।

२२१२ ३२१ १ १२
अवेपयोहोइ। २। अवेपाया२:। होइ। २। ऊवे। २।

२ १२ २ १२ २ १२
हा३१उवा२। ए। वृत्रहासपत्नहा। ३॥ १७ *॥ २७

दृष्टा हिरण्यस्तूपेव त्रिष्टुबेषेन्द्रदेवता।

"वज्री" वज्रयुक्त इन्द्रः "प्रथमानि" पूर्वसिद्धानि मुख्यानि वा "यानि" "वीर्याणि" पराक्रमयुक्तानि "कर्माणि" चकार। तस्य "इन्द्रस्य" तानि वीर्याणि। "नु" चिप्रं "प्रवोचं" प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—"अहिं" मेघम् † "अहन्" हतवान्। तदेकं वीर्यम्। "अनु" पश्चाद् "अपः" जलानि

---

* आ० गा० ३प० ४, १, १७।

† "अहिः"—इति मेघनामसु एकविंशतितमं मेघनाम, १, १०।

अथ द्वादशी।

२ ३१ ३ १२ ३ १२
अग्निरस्मि जन्मना जातवेदा
३ २ ३ १ २ ३ १ २ ३ १
घृतं मे चक्षुरमृतं म आसन्।
३ १ २ ३ १२ ३१ ३ १२
त्रिधातुरर्को रजसो विमानो
१२ ३ १ २ ३ १ २ ३ १ २
जस्रञ्ज्योतिर्हविरस्मि सर्वम्॥ १२ ॥ २८ *

२ ५ २ १ २ १ २१ १ २ ३२ १ २
† हाउ३वा। अग्निरस्मि जन्मना जातवेदाः। इडा।
१ १ २ ५ २ १ २ १ २ १ २ २ १
सुवः। इडा। हाउ३वा। घृतं मे चक्षुरमृतं म आसन्।
१ २ १ १ २ ५ २ १२ २ १२ २२
इडा। सुवः। इडा। हाउ३वा। त्रिधातुरर्को रजसो

"ततर्द" हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। "पर्वतानां" सम्बन्धिनीः "वक्षणाः" प्रवहणशीला नदीः† "प्राभिनत्" कूलद्वय-कर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम् ‡॥ ११ ॥ २७

* ऋ० २,१,२१,१—३,१,२०,२—३,२,५,२४।

† "अग्ने रिलाद्भ्यध्यानुगानम्"—इति आ०ब्रा० ४,२,२४। अस्यैव द्वितीयमेतत्।

† "वक्षणाः"—इति नदीनामसु नवमं नैघण्टुकम् १, १३।

‡ "अथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च बलकृति रिन्द्र-कर्मैव तत्"—इति निरु० दै० १, १०। वृत्रवधो मेघ-वध इति तद्भाष्यम्।

१र २ १ १ २ ३ १ २ २र २ १ २
विमानः । इड़ा । सुव. । इडा । हाउ३वा । अजस्र
१र २ १ २ १ २ १ र १ १ १ र
ज्योतिर्हविरस्मिसर्व्वम । इडा । सुवः । इडा ॥ २ * ॥ २८

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।

उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः ।

हे कुशिकाः! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत्। "एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्न मग्नि रन्नादः"— इति श्रुतेः । तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः । स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके—"स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्"—इति ।

तत्र सः "अग्निः" अहं "जन्मना" एव "जातवेदाः" "अस्मि" श्रवण-मननादि-साधन-नैरपेक्ष्येण स्वभावत एव साक्षात्कृत-परतत्वस्वरूपोऽस्मि। "घृतं मे चक्षुः" यदेतद्विश्वस्यावभासकं मम स्वभावभूतप्रकाशात्मकं चक्षुः तद् घृतम् इदानीं मत्यक्तं दीप्तम्। यदेतद् "अमृतं" कर्म-फलं दिव्यादि-विविध-विषयोपभोगात्मकं तत् "मे" मम "आसन्" आस्ये वर्तते । सकल-भोक्तृ-वर्गात्मना स्वयमेवावस्थानात् † । एवं स्वात्मनः पृथिव्यधिष्ठातृ-रूपतामभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृता माह—अर्कः जगतः स्रष्टा

---

* आ० गा० ३प० ५, १, २ ।

प्राणः। "सोऽर्च्चन्नचरत्तस्यार्च्चत आपो जायन्तार्च्चतेव.मेक मभूदिति तदेवार्कस्यार्कत्वम्"—इति श्रुतेः। स प्राणः अहं "त्रिधातुः"-त्रिधात्मानं विभज्य तत्र वायुात्मना "रजसः" अन्तरिक्षस्य "विमानः" विमाता अधिष्ठातास्मि॥ तथा आदित्यरूपेण द्युलोकाधिष्ठातृता माह—"अजस्रं ज्योतिः" अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यह मस्मि। एवं भोक्तृरूपता मात्मनोनुसन्धाय भोग्यरूपता मप्यनुसन्धत्ते। यत् "हविः" भोग्यं प्रसिद्ध मस्ति तत् "सर्वम्" अप्यह मेवास्मि*।

यद्वा। अहम् "अग्नि रस्मि" देवानां हविः-प्रापणात् अङ्गनादिगुण-युक्तोऽस्मि। किञ्च, "जन्मना" उत्पत्त्या "जातवेदाः" जातज्ञानोऽस्मि। उत्पत्ति-क्षण एव सर्वज्ञोऽह मस्मि। अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—"घृतं मे चक्षुः" यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम, यथा लोके चक्षुर्भासकम् एवं घृतमपि प्रक्षिप्तं ज्वालामुत्पादयत् मम भासकम्। "अमृतं" प्रभारूपं यदमृत मविनाशि ज्योतिः "मे" मम "आसन्" आस्ये वर्त्तते। "त्रिधातुः" प्राणापानव्यानात्मकस्त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह मेवास्मि। तथा "रजसः" अन्तरिक्षस्य "विमानः" विशेषेण मातृ परिच्छेत्ता वायुश्चाह मस्मि। किञ्च। "अजस्रं ज्योतिः" नैरन्तर्येण तापकः सूर्यश्चाह मस्मि। किं बहुना। आज्य-पुरोडाशादिरूपं यदेतद्धवि रस्ति तदुपलक्षितं तत्सर्वं मप्यह मस्मि। "सर्वं खल्विदं ब्रह्म"—इति

* अत्र यट्टीकायितव्यं तत् पुरस्तादेवास्मभिरपि मेजाक्तमस्येत्यत्र टीकितम्।

अथ त्रयोदशी ।

२ ३ २ ३ १२ २र ३ १र
पात्यग्निर्विपो अग्रम्पदंवेः
१र ३ १र २र ३ १ २
पातियह्वश्चरणᳪसूर्य्यस्य ।
२ ३ १ २ ३ १ २ ३ १र
पातिनाभा सप्तशीर्षाणमग्निः
२र ३ १ २ ३ १ २ ३ २
पातिदेवानामुपमादमृष्वः ॥ १३ ॥ २९ *

॥ तृतीय-दशति ॥

१र २र र १ २र २
† हाउ । ३ । पात्यग्निर्विपो अग्रम्पदंवेः । हा३१उवा
३ ५ २ २ ३
२३ । सूर३४वाः । इह । हा३१उवार३ । ज्योर३४
५ १र २र र १ १र २
तीः । हाउ । ३ । पातियह्वश्चरणᳪहरियासा । हा३
३ ५ २ १ ३
१उवा२३ । सूर३४वाः । इह । हा३१उवार३ । ज्योर

स्तुतेः । तमनेकधाम्नेः सर्वात्मकत्व-प्रतिपादनेन परब्रह्मत्व मुक्तं भवति ॥

"अजस्त्र"-"वर्मः"—इति साम्न-ऋचः पाठ-भेदः ॥ १२ ॥ २८

---

* ऋ० ३,१,९,१—३,१,१५,९—३,१,२५,३ ।

† इदमपि तत्रैवाम्नातं तृतीयम् ।

३४तीः । च्छाउ । २ । पातिनाभासप्तशीर्षाणमग्निः । च्छा
३१उवा२३ । सू२३४वाः । इच्च । च्छा३१उवा २३ ज्यो२३४
तीः । च्छाउ । ३ । पातिदेवानामुपपादमार्ष्वः । च्छा३१
उवा२३ । सू२३४वाः । इच्च । च्छा३१उवा२३ । ज्यो२३
४तीः ॥ ३ * ॥ २९

"अग्निः" "वेः" गन्तुाः † सर्वत्र व्याप्तायाः "विपः" रिपः भूम्याः ‡ "अग्रं" मुख्यं "पदं" "स्थानं" "पाति" रक्षति । "यह्वः" ¶ महान् अग्निः "सूर्यस्य" "चरणं" चरत्यनेनेति चरण मन्तरिक्षं§ "पाति" । "नाभा" ‖ नाभौ अन्तरिक्षस्य मध्ये "सप्तशीर्षाणं" सप्तगणं मरुद्गणं "पाति" । "ऋष्वः" दर्शनीयोऽयम् +

* आ० गा० ३प० ५, १, २ ।

† "वेः—इति वेतेर्गतिकर्मणो रूपम्, नै० २, १४, १८ ।

‡ "विपः"—इति रिप इत्यस्य रेफव्यत्यये वकारभावे रूपम्. "रिपः"—इति तु पृथिवी-नामसु पठितं नैघण्टुकम् १, १ ।

¶ "यह्वः"—इति महन्नामसु पठितं नैघण्टुकम् ३, ३ ।

§ "अन्तरिक्षनामसु "अध्वा"—इति (नै० १, ३, १२)

‖ सुपां सुलुगित्यादिना रूपम् (पा० ७, १, ३९) ।

+ "ऋष्वः"—इति महते रूपमिदम् निरु० १, ७—१०, १६—१२, ३७—१४, १३ ।

अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ २ १ १ ३ १ ३ २ ३ १ २ १
भ्राजन्त्यग्नेसमिधानदीदिवोजिह्वाचरत्यन्तरासनि।

१२ ३२ ३ १ २ ३ १२ ३१२ ३२ ३ १ २
सत्वन्नोअग्नेपयसावसुविद्रयिंवर्चोदृशेदाः ॥ १ ॥ ३०

२२ २ २१ २ १ २ २ २
* भ्राजाओहोहोहाइ। त्यग्नेसमिधानादी१दिवा२ः।

२ २ २१ २ १ २ २ २ २
जिह्वाओहोहोहाइ। चरत्यन्तारा१सानी२। सत्वाओ

१ २ १२ २ २ २ २ २ १ २ ३२ २
होहोहाइ। नोअग्नेपयसावसू२वीत्। रयिंवर्चोदृशोहो

१ १ २ ४ ५ ४
३। ऊम्मा२। हा। औ३होवा। हा५इ। डा ॥ ५ † ॥ ३०

"अग्निः" "उपमादम्" "देवानाम्" उपमादकं यज्ञं "पाति" रक्षति ॥

"पात्यग्निर्विपोअग्रम्"—"पातिप्रियेरिपोअग्रम्"--इति पाठौ ॥ १३ ॥ २९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* तस्यैव पञ्चम मिदम्।

† आ० गा० २ प० ५, १, ५।

अथ द्वितीया।

३ १र २र ३ १र २र
वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः।
३ १र २र ३ १ २ ३ १र २र३ १र २र
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः॥ २॥ ३१

२ ४ २ ४ ५ १र २
वा॥ वसन्तः। ई३न्नू३रन्तायाः। ग्रीष्म इन्नुरा१।
२ २ २ १र १ १ २ २ १र
णी३याः। वर्षाण्यनुशा३। ऊम्। रा३दाः। हेमन्तः
३ २ २ १ १ १
शिशिर इन्नुरा२३न्तियाउ। वा३४५॥ ८ †॥ ३१

वामदेव ऋषिः पङ्क्तिर्विराजन्त्यग्न इति द्वयोः।
आग्नेयी प्रथमर्त्तव्या द्वितीया दृश्यते तयोः॥

"समिधान" ऋत्विग्भिः समिध्यमान! दीप्त! हे "अग्ने!" "भ्राजन्ती" प्रकाशमाना "आसनि" आस्ये "अन्तर्" मध्ये स्थिता त्वदीया "जिह्वाः" ‡ हवींषि "चरति" भक्षयति। हे "अग्ने"! "वसुवित्"! धनलम्भक! त्वम् "अस्मभ्यम्" "पयसा" अन्नेन सह "रयिं" रमणीयं धनं "दृशे" दर्शनाय "वर्चः" तेजश्च तेजस्वित्वं वा "अदाः" देहि॥ १॥ ३०

* "ऋतुथा"—इति आ०-ब्रा० ३, २, २४।

† आ० गा० ३प० ५, १, ९।

‡ "जिह्वा"—इति वाङ्नामसु च दृश्यते १,११। अग्नेश्च जिह्वाः सप्त काली-करालीत्येवमाद्यः प्रसिद्धाः, ता एव पुनः सप्ताऽऽदित्यप्यमुक्तोऽन्यत्र।

"वसन्तः इन्नु" वसन्तएव चैत्र-वैशाखरूपो 'वसन्तऋतुरेव "रन्त्यः" रमणीयः भवति। "ग्रीष्मइन्नु" ज्येष्ठाषाढरूपो ग्रीष्म ऋतुरेव "रन्त्यः" रमणीयः। "वर्षाणि" वर्षा श्रावण-भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव "रन्त्यः" रमणीयः। "तान्यनु" "शरदः" आश्विन-कार्त्तिकरूपेणावयवीभूत ऋतुः "रन्त्यः" रमणीयः। "हेमन्त" मार्गशीर्ष-पौषरूप एव "रन्त्यः" रमणीयः। "शिशिरइन्नु" माघ-फाल्गुनरूप एव "रन्त्यः" रमणीयः* ॥ २ ॥ ३२

---

* अत्रोपनिषत् तदाख्यानञ्च यास्क-कृतम्—सप्तयुञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभिचक्रमजरमनर्वं यत्रेमाविश्वाभुवनाधितस्थुः। सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् चक्रञ्चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेद मपीतरन्नाम-तस्मा देवाभिसन्नामात्। संवत्सरप्रधान उत्तरोऽर्द्धर्चः त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति। संवत्सरःसंवसन्तेऽस्मिन् भूतानि। ग्रीष्म ग्रस्यन्ते अस्मिन् रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान्। हिमं पुनर्हन्तेर्वा हिनोतेर्वा अजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभि सन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभि स्तौति। पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तुतया। पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्त-शिशिरयोः समासेन षळर आहुरर्पित मिति षळृतुतया। अराः प्रत्यृता नाभौ। षट् पुनः सहतेः। द्वादशारन्नहितज्जराय। द्वादशप्रधयश्चक्रमेकमितिमासानां। मासा मानात्। प्रधिः प्रहितो भवति। तस्मिन् साकन्त्रिशतानशङ्कवोऽर्पिताःषष्टिर्नचलाचलास। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मण समासेन। सप्तशतानिविंशतिश्चतस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन"—इति निरु० नै० ४, २७।

अथ तृतीया ।

२ १ २   १ १ २   ३ २ ३ १ २
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
१र १र ३१ २ ३ ० २   ३ २
सभूमिꣳ सर्वतो* वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ ३२ †

२ १   २   २ १ र र   २   २
ॐ उद्धवाद्वाउ । ३ । सहस्रशीर्षाःपुरू२३षाः । सह-
र १ २ २   २   १ र   २ १र   २   १
स्राक्षः सहस्रा२३पात् । सभूमिꣳसर्वतोवा२३र्त्वा । अत्यति
२१र   २   २ १   २   २ १   २
ष्ठद्दशाङ्गू२३लाम् । उद्धवाद्वाउ । २ । उद्धवा३द्वाउ ।
२   १   १ १ १ १
वा३ । इट् इडा २३४५ ॥ १३ ¶ ॥ ३२

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्ड-देहो विराडाख्यो यः पुरुषः सोऽयं "सहस्रशीर्षाः" सहस्र-शब्दस्योपलक्षणत्वात् ॥ अनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्र-शीर्ष-त्वम् । एवं सहस्राक्षत्वं सहस्रपादत्वं च । स पुरुषो "भूमिं"

* "विश्वतो"—इति ऋ० । † ऋ० ८, ४, १७, १ ।
‡ "इ पुरुषव्रतं"—इति आ० ग्रा० ३, १, २५ ।
¶ आ० गी० ३प० ५, १, १३ ।
‖ "सर्वतम्"—इति यजुर्माध्य इसंग नैगमे भेम ३, १ ।

अथ चतुर्थी।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिपादूर्ध्व उदैत्पुरुषःपादोऽस्येहाभवत्पुनः।
२ ३ २ ३क २र ३ १ २ ३ २
तथा*विष्वङ् व्यक्रामदशना + नशने अभि॥ ४॥ ३३ ‡

२ १ २ र २ १र र र १
¶ उद्धवौहोवा २। ३। त्रिपादूर्ध्वउदैत्पुरू२३षाः।
१र र र र २ १ २ १ र २ १ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।
२ र र २ २ १ र र २ १
अशनानशनेआ२३भी। उद्धवौहोवा२। २। उद्ध
र १ ३ ५र ३ ५ २ १
वौ। हो२। वा२३४। औहोवा। ई२३४डा। उद्ध
र र २ १ र १ ३ ५र र
वौहोवा२। २। उद्धवौ। हो२। वा२३४। औहो

ब्रह्माण्ड-गोलक-रूपां सर्वतः "भूमिं" समन्तात् "वृत्वा" परिवेष्ट्य दशाङ्गुल-परिमितं देशम् "अत्यतिष्ठत्" अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः॥ ३॥ ३२

---

* "ततो"—इति ऋ०। † "साशना"—इति च ऋ०।

‡ ऋ० ८, ४, १७, ४। ¶ तच द्विनीधनम्।

अथ पञ्चमी ।

१ २ १ २र ३ २ ३ २उ ३ १ २
पुरुषएवेद ँ ‌सर्वयद्भूतंयच्चभाव्यम् † ।

१ ५ २ १ र ७र
वा । हू२३४वाः । उहुवौहोवा२ । २ । उहुवौ ।

१ १ ५र र ३ १ १ १ १
होइ । वा२३४ । औहोवा । ऊ२३४५ ॥ १४ ‡ ॥ ३३

योऽयं "त्रिपात् पुरुषः" संसार-स्पर्श-रहितः बहुल-स्वरूपः सोऽयम् "ऊर्ध्व उदैत्" अस्मादज्ञान-कार्य्यात् संसाराद्वहिर्भूतः सन् तत्रत्यैर्गुणदोषैरसंस्पृष्टः उत्कर्षेण स्थितवान्। "अस्य" योयं "पादः" लेशः सोऽयमिह मायायां प्रादुरभवत् । सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति [ अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताप्युक्तम्—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति" ] तथा मायायामागत्यानन्तरं "विष्वङ्" देव-तिर्य्यगादि-रूपेण विविधः सन् "व्यक्रामत्" व्याप्तवान् । किं कृत्वा ? "अशनानशने" अभिलक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहितमचेतनं गिरि-नद्यादिकम् । तदुभयं यथा स्यात्तथा । यमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥ ३३

---

* "पुरुष्वेद"—इति
† "भव्यम्"—इति । } क्वचिद्दीप-पाठौ ।

‡ आ० गा० १प्र० ५, १, १४ ।

१ २ ३ १ २ ३ १ २ ३१ २३ १ २ ३ २
पादोस्य सर्वाभूतानित्रिपादस्यामृतन्दिवि *॥ ५ ॥ ३४ †

२ र १ २ र २
‡ इयौहोवा २। ३। पुरुषऐवेदꣳसार्२३र्वाम्।
१ र २ १र २ २ र २ र २ २
यद्भूतंयच्चभावार्२३याम्। पादोस्यसर्वाभुतार्२३नी। त्रि
१र र २ १ २ १ र ० र १ र
पादस्यामृतन्दार्२३इवी। इयौहोवा २। २। इयौहो२
३ ५र र ३ ५ १ र र
वार्२३४। औहोवा। ई२३४डा। इयौहोवा २। २।
१ र १ २ ५ र र ३ ५ १ र
इयौहो२। वा२३४। औहोवा। ज्यो२३४ती:। इयौ
र १ र १ ३ ५ र र
होवा २। २। इयौ। हो२। वा२३४औहोवा
३ १ १ १ १
ई२३४५॥ १५ ¶॥ ३४

यत् "इदं" वर्त्तमानं जगत् तत् "सर्व" "पुरुषएव"। "यद्भूतम्" उत्पन्नं जगत् "यच्च भाव्यं" भविष्यज्जगत् तदपि पुरुषएव यथास्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुष-

* "उतामृतत्व"—इत्यादिक ऋग्वेदीयः।

† ऋ० ८, ४, १७, ४।

‡ "त्रीणि लोकानां अमानि, दिवः"—इति ब्रा० भा० ३, २, २५।

¶ आ० गा० १प०५,१,१५।

अथ षष्ठी ।

२उ ३ १ २ ३ १ २
तावानस्य*महिमाततो†ज्यायाꣳश्चपूरुषः ।
३१ २ ३ १ २र ३ १र २र ३ १ २
उतामृतत्वस्येशानेयदन्नेनातिरोहति‡ ॥ ६ ॥ ३५¶

२र १र र २ १ २॰ २र
§ हाउ । ३ । तावानस्य । मह्वा२३इमा३ । हाउ

स्यावयवाः तथैव गतागामिनोऽपि कल्पयोर्द्रष्टव्य मित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—"अस्य" पुरुषस्य "सर्वाणि भूतानि" काल-त्रय-वर्त्तीनि प्राणि-जातानि "पादः" चतुर्थोऽंशः। "अस्य" पुरुषस्यावशिष्टं "त्रिपात्" स्वरूपम् "अमृतं" "विनाश-रहितं" सत् "दिवि" द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। [ यद्यपि "सत्यं ज्ञान मनन्तं ब्रह्म"-इत्यनन्तस्य परब्रह्मणोऽहीयदन्तत्वाभावात् पादचतुष्टयं निरूपयितु मशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वोपचारः ॥ ५ ॥ ३४

* "एतावानस्य"—इति, } ऋ० ।
† "यतो"—इति, }
‡ "पादोऽस्य"—इत्यादिश्च
¶ ऋ० ७, ४, १७, ३ ।
§ "अन्तरिक्षस्य"—इति आ० ब्रा० ९, २, २१ । व्रतमिति शेषः ।

अथ सप्तमी।

१ २ २ १ २ ३ २ ३ १ ३ १ २
ततो*विराड† जायतविराजोअधिपूरुषः।
२ ३ १र २र ३ २४ ३ १ २ ३ २
सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥ ७॥ ३६ ‡

१ र र र २ १र २ २र २ १र
१। ततोज्यायाꣳश्चपूरू२३षा३ः। हाउ। ३। उता-
र २ २र १ र र २ १र
मृतत्वस्येशा२३ना३ः। हाउ। ३। यदन्नेनातिरोहा
२ २ऽ २ १ १ १ १ १
२३ती३। हाउ३। वा३। ई२ इडा२३४५॥ १६ ¶॥३५

अतीतानागतवर्तमान-रूप-जगदाद्याधारो योऽस्ति "तावान्" सर्वोऽपि "अस्य" पुरुषस्य "महिमा" स्वकीय-सामर्थ्य-विशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु "पुरुषः" "ततः" महिम्नोऽपि "ज्यायान्" अतिशयेनाधिक इत्यर्थः। "उत" अपिच "अमृतत्वस्य" देवत्वस्य "अयम् ईशानः" स्व-मायया "यत्" यस्मात् कारणात् "अन्नेन" प्राणिनां भोग्येन अन्नेन निमित्त-भूतेन "अतिरोहति" स्वकीयां कारणावस्था मतिक्रम्य परिदृश्यमान-जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्म फल-भोगाय जगदवस्था-स्वीकारात् नेदन्तस्य वस्तु-तत्व मित्यर्थः॥॥ ६॥ ३५

* "तस्माद्"—इति, } ऋ०।
† "विराज"इति च, }

‡ ऋ० ८,४,१७,५। ¶ आ० गा० २प० ५,१,१६।

२ऽ　　१ र २ १र २र　　१ऽ　　२ १र
हाउ३वा । ततोविराडजायत । हाउ३वा । विरा
२ १र २　　२ ऽ　　२र १र　२
जोअधिपूरुषः । हाउ३वा । सजातोअत्यरिच्यत ।
ऽ　　२ १र र २ १ र २ १　　२ ऽ २　　१ १ १
हाउ३वा । पश्चाद्भूमिमथोपुरः । हाउ३वा३ । ई२३
१ १
४५ ॥ १७ ॥ ३६

"विष्वङ् व्यक्रामत्"—इति यदुक्तं तदेवात्र प्रपञ्चयते—"ततः" तस्मादादि-पुरुषात् "विराट्" ब्रह्माण्ड-देहः "अजायत" उत्पन्नः । [ विविधानि राजन्ते वस्तून्यत्रेति विराट् ‡] "विराजो अधि" विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा "पुरुषः" तद्देहाभिमानी कश्चित् पुमानजायत । योऽयं सर्व-वेदान्त-वेद्यः परमात्मा सएव रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् [ एतच्चाथर्वणिकउत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढइव व्यवहरन्नास्ते माययैवेति†] । "स जातः" विराट् पुरुषः "अत्यरिच्यत" अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देव-तिर्य्यङ्मनुष्यादिरूपोऽभवत् । पश्चाद्देवादि-जीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । "अथो" भूमि-सृष्टेरनन्तरं तेषां जीवानां "पुरः" ससर्ज [ पूर्य्यन्ते सप्तभि र्धातुभि रिति पुरः ] शरीराणि ॥ ७॥ ३६

* "पृथिव्याः"—इति वा० सं० ३,२,२५ । व्रतमिति शेषः ।

† आ० ता० उप० ५, १, १७ ।

‡ "विराट विरमणाद्विराजनाद्वाविराधनाद्वा"—इति दै० ब्रा० ३, १२ ।

मन्येशामिति पञ्चर्चो वामदेवेन वीक्षिताः।
अत्राद्यैकान्तिमे च द्वे त्रिष्टुभस्तासु चादिमा॥
उपरिष्टाज्ज्योतिरिति बहु चैव विधीयते।
अन्ये, अनुष्टुभौ द्यावा-पृथिव्योः प्रथमा तथा॥
द्वितीयैन्द्री चतुर्थी च तृतीयाग्नेर्निजात्मनः।
स्तुतिर्गवा मन्तिमेति छन्दोदैवत निर्णयः॥

अथ अष्टमी।

१ २ ३ १ २ ३
मन्येवान्द्यावापृथिवीसुभोजसौ

१र २र ३ १ २ ३ १र २र
येअप्रथेथाममितमभियोजनम्।

१ २ ३ १ २ ३ १र २र ३ १ २
द्यावापृथिवीभवत१स्योनेतेनोमुञ्चतम१हसः॥ ८॥३७*

१ २र १ २र र र र र
† ऊवाइ। ३। ऊपम्। मन्येवान्द्यावापृथिवीसू३

१ २ र र र १ २
भोजा१सा२उ। येअप्रथेथाममितमभी३योजा१ना२म्।

---

* ऋ० आ० ५, १९, २०, २१।

† "द्यावापृथिव्योः"—इति आ० ब्रा० ३, २, २५।

२र र र १ १ २ १र र १
द्यावापृथिवीभवाइन्नाॅ(स्योऽना२३.। तेनोमुञ्चताऽमाॅ(
१ १ २र ३ ५र र
हा१सा२ः। ऊवाइ। ३। रूपा२। वा२३४औहोवा।
२र र १
ए। रूपम्। ३॥ १८*॥

२ १र २ १ २र र र र
†प्रतिष्ठासिप्रति। ष्ठा। ३। वर्चोसिमनोसि। ए.ही।
१ र र र र र र र र र २र र र
मन्येवान्द्यावापृथिवीसुभोजसावैही। येअप्रथेथाममितम
र र र र २र र र र र र र
भियोजनामैही। द्यावापृथिवीभवतॅ(स्योना। ऐही।
२र र र र र २ १र २ १ २
तन्नोमुञ्चतमॅ(हसाऐही। प्रतिष्ठासिप्रति। ष्ठा। ३। व
र र र २ २र २र१
र्चोसिमनोसि। ऐही३। हाउवा। ए। भूतम्। ३।
॥ २१‡॥ ३७

हे "द्यावापृथिवी" द्यावापृथिव्यौ! "वां" युवां "सुभोजसौ" शोभन-पालयित्राविति "मन्ये" अहं जानामि हे द्यावापृथिव्यौ! "अमितम्" अपरिमितं "योजनं" [युज्यते पुरुषोऽनेनेति योजनम्] धनादि, तत् "अभ्यप्रथेथाम्" अभिविस्तारयतम्। हे

* आ० गा० ३प० ५, १, १९।

† "विपरीतं"—इति आ० ब्रा० ३, ९, २५. तत्र द्वितीयम्।

‡ आ० गा० ३प० ५. १, २१।

अथ नवमी ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी ।
१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वास्तुवन्तिकवयःपुरुषासोवनर्गवः ॥ ८ ॥ ३८

२ र १ २ २ १र र १ २ २ २ १र
* हरीतइन्द्रश्मश्रूणी । उतोतेहरिता१उहा३री । तान्त्वा
२ ४ ५ २ १र र २ ४ ५
स्तुवन्तिका३ । वाया: । पुरुषासोवना३ । गावा: ।
१ र २ १ २ १ २ १ २ १ र
हाउवासइन्द्रभङ्क्तिमघवन्निन्द्रभुङ्क्तिभङ्तिप्रभुङ्क्तिौ
२ र२ १ १ १ १
न्द्रस्तसरपूता२३४५: ॥ २२ † ॥ ३८

"द्यावापृथिवी" द्यावापृथिव्यौ! युवां अस्माकं "स्योने" सुख रूपे‡ स्व-सुख कार्य्ये "भवतम्" "ते" द्यावापृथिव्यौ "नः" अस्मान् "अंहसः" पापात् "मुञ्चतम्" मोचयतम् ॥ ८ ॥ ३७

हे "इन्द्र!" "ते" तव "श्मश्रूणि" "हरी" सोम-पानेन हरितवर्णानि [तथाच श्रूयते—"इन्द्रः श्मश्रूणि हरिताभि पुष्णुते"-इति । "शेश्छन्दसि बहुलम् (६,१,७०)"—इति हरि-

---

* "कण्वस्य साम व्रतं वा"—इति आ॰ ब्रा॰३, २, २५ ।

† आ॰ गा॰ ३प॰ ५, १, १२ ।

‡ "स्योनम्"—इति सुखनामसु पञ्चदशं मैघण्टुकम् ३,६ ।

अथ दशमी।

१उ २ १२ ३१२३१ १२३२
यद्वर्चोहिरण्यस्ययद्वावर्चोगवामुत।
३२ ३१२ ३२३१ २३ १ २
सत्यस्यब्रह्मणोवर्चस्तेनमासꣳसृजामसि॥ १०॥ ३९

२र २१ २१ २र३र १
*—हाउ। ३। हुमन्नम। ३। अहमन्नादो। हम
२र१र २र १र २र १ २र
न्नादो। २। हविधारयौ। २। हविधारयः। हाउ।
१ २र १ २ १ १र१ २र१र २ १ २
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। स
१२ २र१ १ १र २र१ २र १ २र
त्यस्यब्रह्मणोव। चाः। तेनमासꣳसृजाम। साइ। हाउ

शब्दात्परस्य शीर्षक]। "उतो" अपिच। "ते" "हरी" अश्वौ †
"हरितो" हरिद्वर्णौ। "कवयः" मेधाविनः "पुरुषासः" ‡
पुरुषाः "वनगवः" [वननीयाः सम्भजनीयाः धिवनीयाः गावो
येषां ते वनगुवः मध्यरेफश्छान्दसः ¶। गोस्त्रितो (१,२, ४८)
रितिह्रस्वत्वम्] तादृशाः "कवयः" "तं" "त्वा" त्वां स्तुवन्ति॥
॥ ९॥ ३८

* "हिंसां व्रतं दशागुगानम्"—इति षा० आ० ३, २, २६।

† "हरी इन्द्रस्य"—इति निघ० १,१५,१।

‡ "आज्जसेरसुक्"—इति पा० ७, १,५०।

¶ "वर्णागमोवर्णविपर्ययश्च"—इति पा० ३, ४, ९८ वा०।

२ १ २र १र १ २र १र
३। अहमन्नम्। ३। अहमन्नादो। हमन्नादो। २।

१ २र १र १ २र १ २१ २
हंविधारयः। २। हंविधारयः। हाउ३। वा। ए।

२ १ २-६ २र १र १ २र १ १ र१
अहमन्नमहमन्नादोहंविधारयः। ३। ए। अहᳲसुव

र ३ १ १ १ १
र्ज्योतीः३४५ः॥ १ * ॥

२र २ १ २र १ १र १
हाउ। ३। अहᳲसहो। हᳲसहो। २। हᳲ

२र १ २ १ २र १ २ १ र २ र १र
सासहिः। अहᳲसासहिः। २। अहᳲसासहानो।

१ र २ र १र १ र २ र १ २र १ २र १
हᳲसासहानोहᳲसासहानः। हाउ। ३। यद्वर्चोहिर

२ १ १ र १ २र १ र २ १ १ १ १ १ २र १ १
एय। स्या। यद्दावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव। चाः।

१र २र १ २र १ २र २ १ २र
तेनमासᳲहजाम। साइ। हाउ। ३। अहᳲसहो।

१ २र १ २र १ २ १ २र १
हᳲसहा। २। हᳲसासहिः। अहᳲसासहिः। २।

२ १ र २ र १र १ र १ र १र १ र २ र १
अहᳲसासहानो। हᳲसासहानो। हᳲसासहानः।

---

* आ० गा० ३प० ५, २, ९।

२१ २ २र २ १ २र १ २र १ २ १ र २ र
हाउ। ३। वा। ए। अहं॒सवोहं॒सासहिरहं॒सासहा
२र २ १ र २ १ १ १ १
नः। ३। ए। अहं॒सुवर्ज्योती२३४५ः॥ २ *॥

२र २ १ २र १ २र १ २र
हाउ। ३। अहंवर्चा। हंवर्चा। हंवर्चः। हाउ।
१ २र १ २ १ १ २र १ २र १ र २ १ २ १
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्य
२ १ २र १ १ १र २र १ २र १ २र
स्यब्रह्मणोव। चाः। तेनमासं॒हजामि। साइ। हाउ।
१ १र १ २र १ २र २ २र
३। अहंवर्चा। हंवर्चा। हंवर्चः। हाउ। ३। वा। ए।
२ १ २र १ र २ १ १ १ १
अहंवर्चः। ३। ए। अहं॒सुवर्ज्योती२३४५ः॥ ३ †॥

२र २ १ र २र १ र २र १ र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः।
२र १ २र १ २ १ १ ३ १ २ १ र २
हाउ। ३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्।
१ २ १ १ १ २र १ १ १र २र १ २र १
ता। सत्यस्यब्रह्मणोव। चाः। तेनमासं॒हजामि। साइ।
२र २ १ र २र १ र ३र १ र २र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः। हाउ।
२ १ र २ १ र २ १ १ १ १
ए। अहन्तेजः। ३। ए। अहं॒सुवर्ज्योती२३४५ः॥ ४‡॥

*, †, ‡ ग्रा० गा० ३५० ६, २, १-३-४।

हाउ। ३। दिशन्दुहे। दिशन्दुहे। २। दिशीदुहे। ३। दिशोदुहे। ३। सर्वादुहे। ३। हाउ। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव। चाः। तेनमासᳫंसृजाम। साइ। हाउ। ३। दिशन्दुहे। ३। दिशोदुहे। ३। दिशोदुहे। सर्वादुहा। ३। हाउ। वा। ए। दिशन्दुहेदिशोदुहेदिशोदुहेसर्वादुहे। ३। ए। अहᳫंसुवर्ज्योतीः२३४५:॥ ५*॥

हाउ। ३। मनोजयित्। ३। हृदयमजयित्। ३। इन्द्रोजयित। ३। अहमजैषम्। ३। हाउ। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव। चाः। तेनमासᳫंसृजाम। साइ। हाउ। मनोजयित्। ३। हृदयमजित। ३। इन्द्रोजयित्। ३। अहमजैषम्।

* आ० गा० २प० ५, २, ५।

२१ २ २र १ र २ १ २ १ र २ १
३॥ हाउ३वा। ए। मनोजयिष्ठ् दयमजयिदिन्द्रोजयिदच्च

२र २र २ १ र ३ १ १ १ १ १
मजैषम्। ३। ए। अहृ॑सुवर्ज्योतीर२३४५ः॥ ६॥

२र १ १ र २ २र
हाउ। ३। वयः। ३। वयोवयः। ३। हाउ। ३।

१ २र १ २ १ १ २र १ २र १ र २ १ २ १ २
यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्यस्य

१ २र १ १ १र २र १ २र १ २र
ब्रह्मणोव। चाः। तेनमासंसृजाम। साइ। हाउ।

१ १ र २ २१ २ २र १ र
३। वयः। ३। वयोवयः। ३। हाउ३। वा। ए। वयो

२ र २ २र २ १ र ३ १ १ १ १
वयोवयः। ३। ए। अहृ॑सुवर्ज्योती२३४५ः॥ ७॥

२र २र १ २र १ र २ २र
हाउ। ३। रूपम्। ३। रूपंरूपम्। ३। हाउ

१ २र १ २ १ १ २र १ २र १ र २ १ २
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामृता। स

१ २ १ २र १ १ १र २र १ २र १
त्यस्यब्रह्मणोव। चाः। तेनमासंसृजाम। साइ।

२र २र १ २र १ र २ र २ २र
हाउ। ३। रूपम्। रूपांरूपम्। ३। रूपम्। ३। ए।

२ १ १ ३ १ १ १ १ १
अहृ॑सुवर्ज्योती२३४५ः॥ ८ * ॥

---

* आ० गा० १प० ५, २, ६-७-८।

१ २ १ २ १ २
हिंहियऊ२। ३। उदपप्तम्। उदपप्तम्। २।

२र १र २ २ १ २र १ २
ऊर्द्ध्वानभाꣳस्यक्रुषि। ३। व्यद्यौत्सम्। ३। अततनम्।

२र २र २र १ १र १ २ १
३। हाउ। हाउ। हाउ। यद्वर्चोहिरण्य। स्या।

१ २र १२र १ र २ १ २ १ २ १ १र १ १ १र
यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणो व। चाः। तेन

२र १ १र १ १ २ १ २
मासꣳहजाम। साइ। हिंहियऊ२। ३। उदपप्तम्।

२र तर र २ १-२र १ २
३। ऊर्द्ध्वनभाꣳस्यक्रुषि। ३। व्यद्यौत्सम्। ३। अतत

२ २ २र १ २ र१र र २ १
नम्। ३। हाउ३वा। ए। उदपप्तमूर्द्ध्वनभाꣳस्यक्रुषिव्य

२र १ २ ३ १ ३ १ १ १ १
द्यौत्समतनम्। ए३। पिन्वस्वा२३४५॥ ८ *॥

२र १र १ २र १र
हाउ। ३। प्रथे। ३। प्रत्यष्ठाम्। ३। हाउ। ३।

१ २र १ २ १ १ र १ २र१ र २ २ १
यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामृता। सत्य

२ १ २र १ १ १र २र १ २र १ २र
स्यब्रह्मणोव। चाः। तेनमासꣳहजाम। साइ। हाउ।

* छा० गा० ३प० ५, २,८।

अथ एकादशी।

२ ३ १२ २ २ ३१
महस्तन्नइन्द्रदध्योज

३क २ ३ १ २
ईशे ह्यस्य महतोविरप्शिन्।

१र १ २र २५ ३ २ ०र १र
३। प्रशे। ३। प्रत्यष्ठाम्। ३। ह्याउ३। वा। ए। प्रथेप्रत्य

२र ०र २१ र ३ १११
ष्ठाम्। ए। अहऽसुवर्ज्योती२३४५ः॥ १० *॥ ३९

वामदेव ऋषिः। अनुष्टुप् छन्दः। आशासने विनियोज्या।

"हिरण्यस्य" हित-रमणीयस्य एतन्नामकस्य "यद्वर्चः" तेजोऽस्ति। "यद्वा" अपिच। "यवाम्" एतन्नामकानां † "यद्वर्चः" तेजोऽस्ति। "उत" अपिच। "सत्यस्य" सर्वैः सम्मतस्य ‡ "ब्रह्मणः" यद्वर्चोऽस्ति तेन तैः "मा" "संसृजामसि"¶ सम्पादयामः। धनवन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्यार्थः॥ १०॥ ३९

---

* आ० गा० ३प० ५, २, १०।

† "हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः"—इति निरु० नै०२,१०।

‡ गौरिति निघण्टौ वाक्यर्थः (१,११—१,४,४—१,५,३—१,११,४—१,१५,७—२,११,१०।

¶ "सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा।"—इति निरु० नै०३,१२।

॥ "सृजामसि"—इति मा० ९,१,४६।

२ ३ १ ३ १र २र ३ १ २
क्रतुन्ननृम्णᳬस्थविरञ्चवाजं
३ २ ३ १ २ ३ १ २
वृत्रेषुशत्रूनत्सहनाकृधीनः ॥ ११ ॥ ४०

२र १ २ १ २ १
* हाउ। इ। आइही। ३। ओहा। २। ओ
२ २र १ १ १र
हा३। हाउ। ३। सहस्तन्नइन्द्रदध्यो२जाः। आया
१ऽ २र १ १र र र
२उ। ऊ। आयाउ। ३। ईशेह्यस्यमहतोविरा२
१ १र १ऽ २र १ १
प्शायिन् ^। आया२उ। ऊ। आयाउ। ३। क्रतुन्न
१ १र १ऽ २र १
नृम्णᳬस्थविरञ्चवा२जाम्। आया२उ। ऊ। आया
२ १र र र १ १र
उ। ३। वृत्रेषुशत्रूंत्सुहनाकृधा२इनाः। आया२
१ऽ २र १ २र १
उ। ऊ। आयाउ। ३। हाउ। ३। आइही।
१ २ १ २ १ २ २ऽ २र
३। ओहा। ओहा। ओहा३। हाउ३। वा। ए
२र १र २ १ २ र १र र र ३ १ १ १ १
आयुर्द्धास्मभ्यं वर्चोधादेवेभ्या२३४५ः ॥ १० ‡ ॥ ४०

* "कश्यपव्रतं दशाबगानम् * * * गवांव्रते"—इति आ० ब्रा० १, २, १० क्रम प्रथमं मिदम्।

† "प्शादन्"—इति क० पु० पाठः।

‡ आ० गा० ३प० ५, २, १०।

अथ द्वादशी ।

१ १ २　　२ १ २　　३ १ १
सहर्षभाः संसहवत्मा उदेत
१ २ ३ २ ३ १ २
विश्वा रूपाणि विभ्रतीर्द्वधोः ।
३ २ ३ २ ३ १ १　　१ २
उरुः पृथुरयं वो अस्तु लोक
३ १ र　२ र　३ २ ३ १ २
इमा आपस्सुप्रपाणा इहस्त ॥ १२ ॥ ४१

॥ चतुर्थ-दशति ॥

२　　२ १　२ र　१ ३ र　१ र
* हाउ३वा । सहर्षभाःसहवत्सा उदेत । हाउ३

हे "विरप्शिन्" विशेषेण रपणं व्यक्त-वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन् ! विशेषेण स्तोत्र-विषये सत्यवाक्य? "इन्द्र!" "ते" तव "सहः" शत्रूणा मभिभवन-रूपम् "ओजः" बलं "नः" अस्मभ्यं "दद्धि" देहि. [ददाते-श्छान्दसं रूपं लोडि हेर्धिभावादिना] यस्मात् त्वं तस्य "अस्य" "महतः" बलस्य "इशे" ईश्वरो भवसि। अतो हे इन्द्र ! "नः" अस्माकं "क्रतुं न" यज्ञमिवं "नृम्णं" धनं "स्थविरम्" अतिशयेन प्रवृद्धं, "वाजं" बलं च "कृधि" कुरु। किञ्च नोऽस्माकं "शत्रून्" "वलेषु" आवरकेषु उपायेषु "कृधि" कुरु ॥ ११ ॥ ४०

* "निक्रवाभिनिक्रवौ द्वा वनड्डुते वा"—इति षा० ब्रा० १, २, २०। न च प्रथम मिदम्।

१ र २र १र २ १ २र र र २ऽ २ १
वा। विश्वारूपाणिबिभ्रतोद्ध्नोः। हाउ३वा। उरुः-
२ १ र १ र २ र १ २ऽ २ १र र २
पृथुरयम्बोअस्तुलोकः। हाउ३वा। इम। आपःसुप्र-
र १र २ १ २ऽ १ २ १
पाणाइहस्त। हाउ३वा। अस्वमिष्टये३हसमा ॥१९*॥ ४१

हे "सहर्षभाः" वृषभैः सहिताः! "सहवत्साः" वत्सैः सहिताः! गावः! "द्व्यूध्नीः" सायं प्रातः काले द्विविधान्यूधांसि यासां ता द्व्यूध्नीः द्व्यूध्न्यः! "विश्वा" सर्वाणि नाना "रूपाणि" "बिभ्रती" बिभ्रत्यः यूयम् "उदेत" उद्गच्छत समृद्धाः आगच्छत। किञ्च। "उरुः" बहुः "पृथुः" विस्तीर्णः [ उरुः पृथु रिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते। "अयं लोकः" "वः" युष्माकम् "अस्तु" भवतु। "इमा आपः" "इह" लोके भूतले अस्मिंस्थाने "सुप्रपाणाः" सुखेन प्रकर्षेण पातुं योग्याः सन्तु तस्मादिह बद्धीभूताः "स्त" भवत उपविशतेति पूर्वेण सम्बन्धः ॥ १२ ॥ ४१

इति श्रीमत्सायणाचार्य्यविरचिते सामवेदार्थ-प्रकाशे छन्दो-
व्याख्याने षष्ठस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

* आ० गी० ३प० ५, २, १२९.

अथ पञ्चम-खण्डः—

सैषा प्रथमा ।

२ ३ १ २ ३ २ ३ २ ३ १ २
अग्न आयूꣳषि पवस आ सुवोर्जमिषञ्च नः ।
३ १ २ ३ १ २
आरे बाधस्व दुच्छुनाम् ॥ १ ॥ ४२ *

२र १ २र १ १ २ १र र
† भ्राजा । २ । भ्राजा३१उ । वा२ । अग्न आयूꣳ
२ र १र २ १र २ १ २ २र र २ १ र
षि पवसे । आ सुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ।
२र १ २र १ २र १र
भ्राजा । २ । भ्राजा३१उ । वा२ । ए । भ्राज ।
३ ॥ ५ ‡ ॥ ४२

चतुर्दशाग्न आयूꣳषीत्याद्यास्तत्र जगत्यसौ ।
विभ्राट् त्रिष्टुप् चित्रमिति गायत्र्यो द्वादशेतराः ।
आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदश ।
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे ॥
शतं वैखानसा एवं दृष्टवन्तो महर्षयः ।

---

* ऋ० ७, २, १० ३=उ० ६,३,१०,१ ।

† "सूर्यस्य भ्राजाभ्राजे द्वे"—इति आ० ब्रा० ३, २, १८ । तत्र प्रथममिदम् ।

‡ आ० गा० ३प०,६, १, ५ ।

अथ द्वितीया।

३ २ ३ १ २ ३ २उ
विभ्राड्बृहत्पिबतुसोम्यम्मध्वा
३ २ २ ३ १ २ ३ १ २
युर्दधद्यज्ञपतावविह्रुतम्।
१ ३ १ २ ३ १ २ ३ १ २
वातजूतोयोअभिरक्षतित्मना
३ १ २ ३ १र २र
प्रजाःपिपर्त्तिबहुधाविराजति ॥ २ ॥ ४३ *

१ २ १ र १ २ २
हाहाउ। ३। इडा। ३। हस्। वतम्मो।
२ १र र १ १र
३। विभ्राड्बृहत्पिबतुसोमिया२म्माधू२। आयुर्दधद्य
र १ १र र र र
ज्ञपतावविवा२ह्रुता२म्। वातजूतोयोअभिरक्षता२इ
१ २ १र र १ १ २उ
त्मा ना२। प्रजाःपिपर्त्तिबहुधाविरा२जाती२। हाहाउ।

हे "अग्ने" पवमान-रूप! अस्माक मायूंषि अन्नान्येतन्नामकानि वा "पवसे" चरसि "नः" अस्माकम् "ऊर्जम्" अन्नरसम् "इषम्" अन्नं च "आसुव" आभिमुख्येन प्रेरय। किञ्च। "दुच्छुनां" [रक्षोनामैतद्] रक्षांसि "आरे" अस्मत्तो दूरएव ‡ "बाधस्व" सम्पीडय॥ १॥ ४२

* उ० ६,३,५,१=ऋ० ८,८,२८,१।

† "वायोर्विकर्णभासे द्वे सत्योर्वा"—इति आ० ब्रा० ३,३,२८। तत्र विकर्णं नाम प्रथममिदम्।

‡ "आरे"—इति दूरनामसु पञ्चमं नैघण्टुकम् ३, २६।

३। इडा। ३। इस्। ३। ऋतम्मो। ३। औहो
वाहाउ। वा। फा२ट्। ऋतम्मे। ३। औहोवा
हाउ। वा। फा२ट्। ऋतम्मे। ३। औहोवा
हाउ। वा। भ्रा२ट्॥ ७ *॥ ४३

विभ्राण्नामक एतास्तु सूर्य-पुत्रो ददर्श सः।

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः† सूर्यः "बृहत्" परिवृद्धं "सोम्यं" सोममयं‡ "मधु" पिबतु। किं कुर्वन्? "यज्ञ-पतौ" यजमाने "अविह्रुतम्" अकुटिलम्¶ अकण्टकम् "आयुर्द-धत्" अन्नं वा कुर्वन्§। "यः" सूर्यो "वातजूतः" वातेन वायुना प्रेर्यमाणः सन्‖ "त्मना"+ आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिमुखं पालयति [राशि-चक्रस्य वायु-प्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम्] स सूर्यः "प्रजाः" "पिपर्ति" वृष्ट्यादि-प्रदानेन

---

* आ० गा० ३प० ६, १, ७।

† विभ्राडिति कुलतिकर्षणो "भाजते"—इत्यस्य रूपम् (नै० १,१६.१)।

‡ "सोम मर्हति यः"—इति पा० ४, ४, १३७।

¶ "ह्वृ कौटिल्ये (भ्वा० प०)"—इत्यस्येदं रूपमिष्टं विह्रुतमितीत्यभिप्रायः। "ह्वः करस्छन्दसि (७, २, ३१)"—इति ह्वु आदेशः। "अविह्रुत मखण्डित मायुः"—इति वेददीपः य० मा० शा० सं० ३३, ३४।

§ "आयुः"—इत्यन्नवाचकमस्तु चयोविंशं पदम् २, ७।

‖ "जुङ् गतौ (भ्वा० आ०)"—इत्यस्यैव णिजन्तस्येदं जूत इति रूपमित्यभिप्रायः।

+ "मन्त्रे ष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३

चित्रन्देवानामुदगादनीक

१ २ ३ २ ३ १ २ ३ २

ञ्चक्षुर्मित्रस्यवरुणस्याग्नेः।

२ ३ १ २ ३ २ ३ १ २ ३

आप्राद्यावापृथिवीअन्तरिक्षꣳ

१ २ ३ १२ २२ ३ १ २

सूर्यआत्माजगतस्तस्थुषश्च ॥ ३ ॥ ४४ *

१ १ १ १ १ १

† उवी२उवि। उविद्दो२उवि। त्रिः। इती२इति।

१ १ १ १ १ १

इतिद्दो२इति। त्रिः। असी२असि। असिद्दो२अ-

१ २ ३ २ १ २ १२ १ १

सि। त्रिः। अहस्तंचोदिवम्पृथिवीम्। असी२असि।

१ १ १ २ ३ १२ २ २२ २

असिद्दो२असि। एवन्त्रिः। पतिर। अपामोषधीना

पूरयति पालयन्ति वा। "बहुधा" "विराजति" विशेषेण दीप्यते च॥

"पिपर्ति"-"पुपोष"—इति, "बहुधा"—"पुरुधा"—इति च पाठौ॥ २॥ ४३

* ऋ० १, ८, ७, १।

† "आदित्यतनम्"—इति आ० ग्रा० २, १, २९।

३म्। ओइ। पताइरा२३४सौ। एवम्। त्रिः। चा
इ। त्रन्देवानामुदगादनीकम्। वाइश्वेषान्देवानाꣳ
समिदजस्रञ्ज्योतिरानता२म्। होइ। ३। आयुर्यन्।
३। अवः। ३। चक्षुर्मित्रस्यवरुणस्याग्नेः। सुवःसꣳ
सर्पसꣳसार्पा३। जनावनꣳसुवा२ःसुवः। जना२वना
२म्। सुवा२ःसुवः। त्रिः। आप्राद्यावापृथिवीआन्त
री२३क्षा३म्। इपिप्रद्रूपोऐही। ३। अस्तोषतस्वभा
नवाऐही। विप्रानविष्टयामताऐही। ग्रावाणोबर्हिषिप्रि
याऐही। इन्द्रस्यरꣳहिम्बृहादैही। इन्द्रा२स्यरा२।
हिया२म्। बृहदिन्द्रस्यरꣳहियम्बृहादैही। ३। एवं
त्रिः। सूर्यआत्माजगतस्तस्थुषा२३स्वा३ः। अन्तश्चरति
रोचनाऐही। ३। अस्यप्राणादपानता। ऐही। ३।

२ र र र र १र२र र र १ऽ
व्यख्यन्महिषोदिवामैही । ३ । प्रोणतिप्रोणति । ३ । प्रो ।
२र १ ३र२ ५र०र २ २र१र
एति । २ । प्रा२३ । एता३४औहोवा । ए३ । देवा
र र १११११
दिवाज्योतीर२३४५: ॥ १ * ॥

२र र २र ३र२र ४र र २ र
† हाउहाउहाउ । भ्राजाओवा । ३ । उदुत्यञ्जा । ३ ।
२ १ र र र ० २ २र र ३र २र
चित्रन्देवानामुदगादनी२३का३म् । हाउ२हाउ । भ्राजा
३र र २र १ ०
ओवा । ३ । तवेदसम् । ३ । चक्षुर्मित्रस्यवरुणस्यआ२३
१ २र र ३र२र३र र २र र
आ३इ: । हाउ२हाउ । भ्राजाओवा । ३ । देवंवहा ।
१र र र २ र ० २ २र २र
३ । आप्राद्यावापृथिवीआन्तरी२३क्षा३म् । हाउ२हाउ ।
३र २र ३र र २र १र र र
भ्राजाओवा । ३ । तिकेतवः । ३ । सूर्यआत्माजगतस्ता
० २ २र र ३र२र३र र २र
स्थुषा२३आ३ । हाउ२हाउ । भ्राजाओवा । ३ । दृशे
र १र र र ० २ २र
विश्वा । ३ । सूर्यआत्माजगतस्तास्थुषा१२आ३ । हाउ

* आ० गा० ३प० ६, २, १ ।

† "सौर्य्यातिषङ्गः"—इति आ० ग्रा० ३, २, १९ ।

र २र २र २र र २र
२हाउ। भ्राजाओवा। ३। यसूर्यम्। २। यसू२३रि
२ २ २ २र १र र र ३ १ १ १ १
याउ। वा३। ए३। देवादिवाज्योती२३४५ः॥ ४* ॥

२र २र १ र २ २र १ र २
† हाउ। ३। भ्राजाभ्राज। ३। आयूरायुः।
१ २ र १ र २ २ १ र र र
३। उदुत्यञ्जा। ३। तंवेदमम्। ३। चित्रन्देवना-
७ २ २र २र १ र २ २
मुदगादनी२३का३म्। हाउ। ३। भ्राजाभ्राज। आ
१ र २ १र २ र १ ७ २
यूरायुः। देवंवहा। ३। चक्षुर्मित्रस्यवरुण। स्या२३ग्ना
२र १र १ र २ २र १ र २
३इः। हाउ। ३। भ्राजाभ्राज। आयूरायुः। ३।
१ र २ १र १ र र र ७ २
तिकेतवः। ३। आप्राद्यावापृथिवीआन्तरी२३क्षा३म्।
२र २र १ र २ २र १ र २ १ र २
हाउ। ३। भ्राजाभ्राज। आयूरायुः। २। हस्रोवि
र १र र र ७ २ २र
श्वा। ३। सूर्यआत्माजगतस्तास्थुषा२३श्चा३। हाउ। ३।
२र १ र २ २र १ र २ १ र २
भ्राजाभ्राज। ३। आयूरायुः। ३। यसूर्यम्। ३।

---

* आ० ग्रा० २प० ६, २, ४।

† "मित्रावरुणयो: ओतमित्याचक्षते"—इति आ० ब्रा० ७. २. १९।

१ २ २ २ २र १र र र ३ १ १
यसू २ ३ रियाउं । वा३ । ए३ । देवादिवाज्योती २ ३
१ १
४ ५ः ॥ १८ * ॥ ४४

कुत्साः । "देवानां" दीव्यतीति देवा रश्मयः तेषां, देवानामेव वा प्रसिद्धानाम् † "अनीकं" तेजः समूह रूपं "चित्रम्" आश्चर्यकरं सूर्यमण्डलम् "उदगात्" उदयाचलं प्रयासीत् । कीदृशम् ? "मित्रस्य वरुणस्याग्नेश्च चक्षुः" उपलक्षणमेतत्, एतदुपलक्षितानां जगतां चक्षुः प्रकाशक चक्षुरिन्द्रियस्थानीयं वा । उदयं प्राप्यैव "द्यावापृथिवी" दिवं च पृथिवीं च "अन्तरिक्षं" च "आप्राः" स्वकीयेन तेजसा "आ" समन्तात् अपूरयत् । ईदृग्भूत-मण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा "जगतः" जङ्गमस्य "तस्थुषश्च" स्थावरस्य च "आत्मा" स्वरूपभूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य-वर्गस्य [कारणाच्च कार्यं नातिरिच्यते । तथाच पारमर्षं सूत्रम् ‡—"तदनन्यत्वमारम्भण शब्दादिभ्यः"—इति] यद्वा । स्थावर-जङ्गमात्मकस्य सर्व-प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सत् उपलभ्यते ¶ [तथाच श्रूयते—"योऽसौ तमो नुदेति सर्वेषां प्राणानादायोदेतीति" ॥ ३ ॥ ४४

---

* आ० ग्रा० ३प० ६, २, १९ ।

† "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः । सा देवता"—इति निरु० दै० १, १५ ।

‡ "शाङ्कराभाष्य-प्रणेतृ-कपिलनामर्षि-कृतमित्यर्थः ।

¶ "आयमीयं देवाना मुदगम दनीकं स्थामं मित्रस्य वरुणस्याग्ने आपूपुरद् द्यावापृ-

अथ चतुर्थी ।

१२ २र ३ १ २ ३ ३ १ २ ३ २
आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ।
३ १ २ ३ १ २
पितरञ्च प्रयंत्स्वः ॥ ४ ॥ ४५ *

१ ऽ १ ऽ १ २
उवौ२ । ३ । हिगो२ । ३ । हिगिगि । ३ ।

---

थिव्यौ चान्तरिक्षञ्च महत्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च"—इति निरु० दै० ६, १६ । अत्र वेददीपकृद्व्याख्यानन्त्वेवम्—"पूर्वापररूपेण स्थितः सूर्योऽत्र स्तूयते । सूर्यः चित्र माश्चर्यं यथा तथा उदद्यात् उदयं प्राप्तः उद्गच्छति वा । आश्चर्यम् । उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्यैषां ज्योतींष्यादत्त इत्याश्चर्यम् । किम्भूतः सूर्यः ? देवानां दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषा मनीकं मुखं माश्रय इत्यर्थः । यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः । तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत् प्रकाशकं इत्यर्थः । मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽपि व्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावा पृथिवी दिवं भूमिं अन्तरिक्षं आप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः । एवमपररूपेण स्तुत्वापररूपेण स्तौति—किम्भूतः सूर्यः ? जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मा अन्तर्यामी । यमेतमादित्ये पुरुषं वेदयन्ते इन्द्रः स प्रजापतिस्तद्ब्रह्मेति 'श्रुतेः' सूर्याद्वैतमनेनोच्यते इति भावः" ( य० मा० शु० स० ७, ४२ ) ॥ "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । योसावादित्ये पुरुषः सोऽसावहम्"—इति वाजसनेय्युपनिषदन्तिमा ऋक् ॥ "पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य"—इति निरु० नै० २, ३ ।

* उ० ९, १, १६, १=ऋ० ५, ९,४०, १ ।

† "गन्धर्वाप्सरसा मानन्दप्रतिनन्दौ पक्षौ"—इति आ० ब्रा० ३, २, २९ । तदेव मानन्दनाम साम ।

२र र र र र २ र र र र
आयङ्गौःपृश्निरक्रमीदैहो। ३। असदन्मातरम्पुराऐहो।
२ र र र १ ऽ १ ऽ
३। पितरञ्चप्रयंतस्वा ऐहो। ३। उवीर। ३। हिगीर।
१ २
३। हिगिगि। ३॥ २ *॥

२ १ २ १ २ १ २र र
† उवी। ३। हिगी। ३। हिगिगी। ३। आयङ्गौः
र र र २ र र र र २
पृश्निरक्रमीदैहो। असदन्मातरम्पुराऐहो। पितरञ्चंप्र
र र र २ १ २ १ २ १
यंतस्वाऐहो। उवी। ३। हिगी। हिगिगी॥ ३ ‡॥

२ऽ १ २ ३र २र ३र र २र र
¶ हाउ३वा। इन्दूः। भ्राजाओवा। ३। आयङ्गौः
र र र २ऽ १ २ ३र २र ३र र
पृश्निरक्रमीदैहो। हाउ३वा। इडा। भ्राजाओवा। ३।
२ र र र र २ऽ १ ३ ३र २र ३र
असदन्मातरम्पुराऐहो। हाउ३वा। मात्यम। भ्राजाओ

* आ० गा० ३प० ६, २, २।

† "तत्र प्रतिनन्दं"—इति आ० ब्रा० ३, २ २९।

‡ आ० गा० ३प० ६, २, ३।

¶ "तिस्र सार्पराज्ञः"—इति आ० ब्रा० ३, ९, २९। तत्र प्रथम मिदम्।

र २ ४ र र २ १ र
वा। ३। पितरञ्चप्रयंत्स्वाऐही। द्दाउ३वा। द्यौः।
॥ ७* ॥ ४५

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता॥

"गौः" गमनशीलः † "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः‡ "अयं" सूर्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं "भूमिम्" "असदत्" आसीदति प्राप्नोति [सदेश्छान्दसो लेट्¶। लृदित्वात् च्लेरङादेशः§] ततः "पितरं" पालकं द्युलोकम्, "च" शब्दादन्तरिक्षं "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः॥ शोभन-गमनो भवति। यद्वा। पितरं स्वर्लोकं प्रवर्त्तते॥ ४॥ ४५

* आ० गा० ३प० ६, २, ७।

† "गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षेऽथ द्यौर्यत् पृथिव्या अधि दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति"—इति निरु० नै० २, १४।

‡ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्पृष्टा रसान् संस्पृष्टा भासं ज्योतिषां संस्पृष्टो भामेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च"—इति निरु० नै० २, १४।

¶ "लिङर्थे लेट्"—इति पा० ३, ४, ७।

§ "पुषादिद्युताद्युदितः परस्मैपदेषु"—इति पा० ३, १, ५५।

|| "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता"—इति निरु० नै० २, १४।

अथ पञ्चमी ।

अन्तश्चरति रोचनास्य प्राणादपानती ।
व्यख्यन्महिषोदिवम् ॥ ५ ॥ ४६ *

† औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१ओ । वा२३ । भू२३४वात् । अन्तश्चरति रोचना । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । जा२३४नात् । अस्य प्राणादपानती । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । वा२३४र्हान् । व्यख्यन्महिषोदिवम् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । का२३४रात् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । भू२३४तीः । औहो

* उ० ६, १, ११, २ = ऋ० १०, १८९, २ ।
† "मरुतां भूतिः"—इति ब्रा० ३, ३, २९ ।

औहोवा । होइ । २ । औहोऔहोवा । हाइ१उ । वा२ । अभ्राजीज्योतिरभ्राजीत् । औहोऔहोवा । हो इ । २ । औहोऔहोवा । हा३१उ । वा२३ । ए३ । सर्वान्कामानशीमही२३४५ ॥ ६ * ॥

¶ हाउ३वा । भूतम् । भ्राजाओवा । ३ । अन्तश्च रतिरोचना । ऐही । हाउ३वा । पृथिवी । भ्राजाओ वा । ३ । अस्यप्राणादपानताऐही । हाउ३वा । माहः । भ्राजाओवा । ३ । व्यख्यन्महिषोदिवामैही । हाउ३वा । तेजः ॥ ८ † ॥ ४६

¶ अन्तर्देवेषू३रोचा१मा २इ । ३ । अन्तश्चरती३रो

---

* आ० गा० ३प० ६, २, ६ ।

† तत्र द्वितीयमिदम्—इति ( सा० ब्रा० ३, २, १९ )

‡ आ० गा० ३प० ६, २, ८ ।

¶ "मित्रावरुणयोस्त्रिरित्यावर्तते" —इति सा० ब्रा० ३, २, १९ ।

२ २ र र १ २ २
चा१ना२। अस्यप्राणादा३पाना१ता२इ। व्यख्यन्महो३
१ २ २ र र १ २ २
षोदा१इवा२म्। अन्तर्देवेष३रोचा१सा२इ। २१. अन्त
र र १ १ ३ ५र र २ २१ १र र
र्देवेष३रो२३। चा२सा२३४औहोवा। ए३। देवादिवा
र ३ १ १ १ १
ज्योती२३४५: ॥ १८ * ॥ ४६

"अस्य" सूर्यस्य "रोचना" † रोचमाना दीप्तिरन्तःशरीरमध्ये मुख्यप्राणात्मना "चरति" वर्त्तते। किं कुर्वती? "प्राणादपानती" [मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाडीभि रूर्ध्वं वायोर्निर्गमनम्] तथाविधात् प्राणात् प्राणना दनन्तरम् अपानती [अपाननं नाडीभि रवाङ्मुखं वायोर्नयनम्] तत् कुर्वन्ती [अपमूर्वादनितेर्लटः शतृ, (३, २, १२४) अदादित्वाच्छपो लुक् (२, ४, ७२)। उगितश्चेति (४, १, ६) ङीप्। शतुरनुम इति ‡ नद्या उदात्तत्वम्। यद्वा। "अन्तः" द्यावापृथिव्योर्मध्ये "अस्य" सूर्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति [रुच दीप्तौ (भ्वा० आ०)। अनुदात्तेतश्च

---

* आ० गा० ३प० ६, ९, १८।

† रोचना इति "रोचते"—इति ज्वलतिकर्मणोरूपमित्यभिप्रायः (निघ० १ १६, ८)।

‡ "शतुरनुमोनद्यजादी"—इति पा० ६, १, १७३।

अथ षष्ठी ।

३ २उ ३ १ २ ३ १ २ ३ १ २
त्रिंशद्धाम विराजति वाक् पतङ्गाय धीयते ।
२ ३ २ ३ २ ३ १ २
प्रति वस्तोरहद्युभिः ॥ ६ ॥ ४७ *

२१ १ २ २र२र ३र र २
† हाउ३वा । आपः । भाज्राओवा । ३ । त्रिंशद्धा
र र र र २१ १ २ २र२र २र र
मविराजताऐहो । हाउ३वा । ऊर्पा । भाजाओवा ।
२र र र र र र २ १ २
३ । वाक्पतङ्गायधीयताऐहो । हाउ३वा । दीशः ।

हलादेरिति (३,२,१४९) युच्] । किं कुर्वन्ती ? "प्राणात्" प्राणनादुदयादनन्तरम् "अपानती" सायाह्न-समये अस्तङ्गच्छन्ती । ईदृश्या दीप्त्या युक्तः अतएव "महिषो" महान् सूर्यः ‡ "दिवम्" अन्तरिक्षं उदयास्तमययोर्मध्ये "व्यख्यत्" विचष्टे प्रकाशयति [महि रचि महेष्टिषजिति औणादिकष्टिषच् प्रत्ययः । चक्षिङः ख्याञ् (२,४,५४) छान्दसे लुङि ¶ अस्यतिवक्तिख्यातीत्यादिना (३, १, ५२) लेरङादेशः ॥ ५ ॥ ४९

* उ० ६, १, ११, ३ = ऋ० ८, ८, ४७, ३ ।

† तयं वाग्निर्मिदम्—इति आ० ब्रा० ३, २, १९ ।

‡ "महिषः"—इति महन्नामसु चैहमं नैघण्टुकम् ३, ३ । "महान् कस्मान्मानेनान्यान् जहातीति शाकपूणि मंहनीयो भवतीति वा"—इति निरु० नै० ३, १३ ।

¶ "छन्दसि लुङ् लङ् लिट"—इति पा० ३, ४, ६ ।

२र ३र ३र र १ र र र र २

भाजा३ओवा। ३। प्रतिवस्तोरहद्युभाऐहो। हाउ३वा।

१ २

ज्योतिः॥ ८ *॥ ४७

"त्रिंशद्धाम" धामानि स्थानानि [ वचनव्यत्ययः ( ३, १, ३८ ) ] "वस्तोः" वासरस्य † अहोरात्रस्यावयवभूतानि। "अह" शब्दोऽवधारणे ‡। "द्युभिः" सूर्यस्य दीप्तिभिरेव ¶। "विराजति" विराजते विशेषेण दीप्यते [ व्यत्ययेनैकवचनम् ( ३, १, ३८ )। मुहूर्तान्यत्र धामान्युच्यन्ते। पञ्चदश रात्रेः पञ्चदशाह्नः ] "पतङ्गाय" पतति गच्छतीति पतङ्गः सूर्यः § तस्मै सूर्याय स्तुति-रूपा "वाक्" "प्रतिधीयते" प्रतिमुखं स्तोतृभि र्विधीयते क्रियते। यद्वा "वस्तोः" अह्नः "त्रिंशत्" "धाम" धामानि [ घटिकाभिप्रायमेतत् ] त्रिंशद्घटिकाः [ अत्यन्तसंयोगे द्वितीया (२, ३, ५)] एतावत् कालं "द्युभिः" दीप्तिभि रसौ सूर्यो "विराजति" विशेषेण दीप्यते। तस्मिंश्च समये "वाक्" त्रयी-रूपा तस्मै "पतङ्गाय" "प्रतिधीयते" प्रतिमुखं धार्यते तं पूर्व

* आ० गा० ३प० ६, २.९।

† "वस्तोः"—इति अहर्नामसु प्रथमं नैघण्टुकम ( १.९ )।

‡ "अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते। अयमहेदं करोत्वयमिदं ह करिष्यतीदं न करिष्यतीति"—इति निरु० नै० १, ५।

¶ "द्योतत इति सतः"—इति निरु० नै० १, ६।

§ "पतङ्गः"—इति अश्वनामसु द्वाविंशं नैघण्टुकम १, २४।

अथ सप्तमी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
अपत्ये तायवोयथानक्षत्रायन्त्यक्तुभिः।

१ २ ३ १ २
सूरायविश्वचक्षसे ॥ ७ ॥ ४८*

अथाष्टमी।

१ २ ३ २ २ २ ३ २ ३ २ ३ १ २
अदृश्रन्नस्यकेतवोविरश्मयोजनाꣳअनु।

१ २ ३ १ २
भ्राजन्तोअग्नयोयथा ॥ ८ ॥ ४९†

२र क र ३र २र ३र२ २ र २
‡ हाउहाउहाउ। भ्राजाओवा। ३। दिदीहिवि

२ २ र १ २ २र
श्वतस्पृथुः। उदुत्यञ्जातवेदसꣳ सारम्। देवंवह

सेवत इत्यर्थः॥ [श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः"—इति। यद्वा त्विह सूक्ते सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ६ ॥ ४७

* ऋ० १, ४, ७, २। † ऋ० १, ४, ७, ३।

‡ "षडैन्द्राः परिधयऋतूनाम्"—इति आ० ब्रा० ३, ९, २९। तत्र प्रथम मिदम्।

न्तो३काइता१वा २:। हंशो विश्वाया३सूरा१या २म्। अ

पत्ये ताया३वोया१था २। नक्षत्रायन्तीयाक्तू१भा २इः।

सूरायविश्वा३चक्षा१मा २इ। अदृश्रन्नस्या३काइता१वा २:।

विरश्मयोजा३ना७आ१नू २। भ्राजन्तोअग्ना३योया१था

२३। हाउ३हाउ। भ्राजाओवा। २। भ्राजाओ

३५वा६५६। ई २३४५॥ ११*॥

† हाउ२हाउ। भ्राजाओवा। ३। दिदीहिविश्वतस्पृ

थुः। उदुत्यञ्जाता३वाइदा१सा २म्। देवंवहन्तो३

काइता१वा २:। दृशेविश्वाया३सूरा१या २म्। अपत्ये

ताया३वोया१था २। नक्षत्रायन्तीयाक्तू१भा २इः। सूरा

यविश्वा३चाक्षा१सा २इ। अदृश्रन्नस्या३काइता१वा २:।

---

* आ० गा० ३प० ६, २, ११।

† तत्रैवेदं द्वितीयम्। (आ० गा० ३, २, २९).

२ र १ २ २र र १ २
विरश्मयोजा३ना ऽ आ२न् २ । भ्राजन्तोअग्ना३योया१था२३ ।
२र र ३ २र २र र ३ २ ४
हाउ२हाउ । प्रुक्राओवा । ३ । प्रुक्रा३ओ५वा६५६ ।
३ १ १ १ १
ई२३४५ ॥ १२ * ॥ ४८ ॥ ४९

"त्ये" "तायवः" "यथा" प्रसिद्धास्तस्करा इव "नक्षत्राणि" देवगेहरूपाणि [ "देवगृहा वै नक्षत्राणि"—इति श्रुत्यन्तरात् । यद्वा, इह लोके मानुषा ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते । तथाच श्रूयते—"यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्"—इति । यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते । "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति"—आम्नानात् । यास्कस्त्वाह—"नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्"—इति ] यथाविधानि नक्षत्राणि "अक्तुभिः" रात्रिभिः सह "अप यन्ति" अपगच्छन्ति । "विश्वचक्षसे" विश्वस्य सर्वस्य प्रकाशकस्य "सूर्याय" सूर्यस्य आगमनं दृष्ट्वेति शेषः [ तस्करा नक्षत्राणि च रात्रिभिः सह सूर्यं आगमिष्यतीत्याकुलायन्त इत्यर्थः । तायुरिति स्तेननाम ( नै ३, २४, ७ ) तायुस्तस्कर इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम ( नै० १, ७, ४ ) शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ७ ॥ ४८

* छा० गा० ३प०.६, २, १२ ।

अथ नवमी।

३१ २ ३ १ २ २ १ २
तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य।

२ ३ १ २ ३ २
विश्वमाभासिरोचनम्॥ ९ ॥ ५० *

अथ दशमी।

१ २ ३ २ ३ १ २ ३ १२ २२ ३ १ २
प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान्।

२ २उ २क २२ ३ २
प्रत्यङ्विश्व०स्वर्दृशे॥ १० ॥ ५१ †

अथ एकादशी।

१ २ ३ १ २ २ २ ३ १ २ १ २
येनापावकचक्षसाभुरण्यन्तञ्जना०अनु।

१ १ ३ १ २
त्वंवरुणपश्यसि॥ ११ ॥ ५२ ‡

"अस्य" सूर्यस्य "केतवः" प्रज्ञापकाः "रश्मयः", दीप्तयः "जनान् अनुव्यदृश्रन्" जनान् सर्वान् अनुक्रमेण प्रेचन्ते। सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—"भ्राजन्तः" दीप्यमाना "अग्नय इव"॥

—"व्यदृश्रन्"-"अदृश्रम"—इति पाठौ॥ ८ ॥ ४९

---

* ऋ० १, ४, ७, ४। † ऋ० १, ४, ७, ५।

‡ ऋ० १, ४, ७, ६।

२र र ३र २र १र र २ र १ २
* हाउ२हाउ। भूताओवा। ३। दिदोहिविश्वतस्पृ

१ २ १ २ २र ३ १ २
थुः। तरणिर्विश्वा३दाशी१ता२ः। ज्योतिष्कृदसीसूरा१

२ र र १ २ २ र र
या२। विश्वमाभासो३रोचा१ना२म्। प्रत्यङ्देवा३

१ २ २ र १ २
नांवा१इशा२ः। प्रत्यङ्देषी३मानू१षा२न्। प्रत्यङ्

१ २ २र र र १ २
विश्व॑स३वाहे१शा२इ। येनापावका३चाचा१सा२।

२ १ २ २ १ २
भुरण्यन्तञ्जा३ना॑आ१नू२। त्वंवरुणा३पाश्या१सा२३इ।

२र र ३र २र ३र र ३र २ ४ ५
हाउ२हाउ। भूताओवा। २। भूता३ओ५वाई५६।

३ १ १ १ ०
ई२३४५॥ १३ †॥

२र र ३र२र३र र ३ र १ २
‡ हाउ२हाउ। तेजाओवा। ३। दिदोहिविश्वतस्पृ

१ २ १ २ २र ३ १ २
थुः। तरणिर्विश्वा३दाशी१ता२ः। ज्योतिष्कृदसीसूरं

२ र र १ २ २ र र
१या२। विश्वमाभासो३रोचा१ना२म्। प्रत्यङ्देवा३

* तत्र तृतीय-मिदम् (आ॰ ग्रा॰ ३, २, २९)।

† आ॰ गा॰ ३प॰ ६, २, १३।

‡ तत्र चतुर्थ मिदम् (आ॰ ग्रा॰ ३, २, २९)।

१ २ २ र १ २ २
मावा१इ्भा २ः। प्रत्यङ् देषी३मानू१षा २न। प्रत्यङ्
१ २ २र र र १ २
विश्वं५स्व३र्दाई१शा २इ। येनापावका३चाक्षा१सा २।
२ २ २ २ १ २
भुरण्यन्तञ्जा३ना५आ१न २। त्वंवरुणा३पाश्या१सा२३इ।
२र र ३र २र ३ २र ३र २ ४ ३ १
हाउ२हाउ। तेजा३ओवा। २। तेजा३ओ५वा६५६। ई२
१ २ १
३४५॥ १४ *॥ ५०॥ ५१॥ ५२

हे "सूर्य" त्वं "तरणिः" प्रगन्ता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि; [ तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाण नमोऽस्तु ते" —इति ] यद्वा। उपासकानां रोगात्तारयितासि ["आरोग्यं भास्करादिच्छेत्"—इति स्मरणात् ] तथा "विश्वदर्शतः" विश्वैः सर्वैः प्राणिभिर्दर्शनीयः [ आदित्य-दर्शनस्य चण्डालादि-दर्शन-जनित-पाप-निवर्हण-हेतुत्वात्। तथाचापस्तम्बः-"दर्शने ज्योतिषां दर्शनम्"—इति यद्वा, "विश्व" सर्वं भूतजातं "दर्शतं" द्रष्टव्यं प्रकाश्यं येन स तथोक्तः ] तथा "ज्योतिष्कृत्" ज्योतिषः प्रका-

* श्वा० गा० ३प० ६, २. १४।

† "तरणिः"—इति निघण्टौ तु (२, १५) क्षिप्रनामसु पान्थं पद। तरणिरोजसाना (४३० पृ०) मिति मन्त्र-व्याख्यायामप्येवमेव व्याचख्यौ तारकमिति; माधवस्तु क्षिप्रं दातारं वा—इति।

शस्य कर्त्ता, सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः। यद्वा, चन्द्रादीनां [रात्रौ हि अस्तमये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति। यथा द्वारस्य दर्पणोपरि निपतिताः सूर्यरश्मयो गृहाभ्यन्तरवर्त्ति तमो निवारयन्ति तद्वदित्यर्थः] यस्मादेवं तस्मात् "विश्व" प्राप्तं "रोचनं" रोचमानम् "अन्तरिक्षम्" "आ" समन्तात् "भासि" प्रकाशयसि ॥

यद्वा, हे "सूर्य" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्! "तरणिः" संसाराब्धेस्तारकोऽसि। यस्मात् त्वं "विश्वदर्शतः" विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्त्तव्य इत्यर्थः [अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्त्तते] "ज्योतिष्कृत्" ज्योतिषः सूर्यादेः कर्त्ता [तथाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत"—इति*] ईदृशस्त्वं चिद्रूपतया "विश्वं" सर्वं दृश्यजातं "रोचमानं" दीप्यमानं यथा भवति तथा "आ भासि" प्रकाशयसि [नेत्रं त्वत्करणे हि सर्वं जगद् दृश्यते।†

* "चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत"—इति य० मा० शा० स० ३१ अ० १२ क०। 'यथा दध्यादि-द्रव्याणि, गवादयः पशवः, ऋगादयो वेदाः, ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः सकाशात् सूर्यः अजायत। वायुः प्राणश्च श्रोत्रात् कर्णादजायत। मुखादग्निरजायत' —इति च तद्भाष्ये महीधर-कृतम्।

† "हे सूर्य! त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्वं माभासि प्रकाशयसि च अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीय तेज इत्यर्थः। कीदृशं विश्वम्? रोचनं दीप्यमानं

तथा चाम्नायते—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"—इति * ॥ ८ ॥ ५०

हे सूर्य ! त्वं "देवानां" "विशः" मरुन्नामकान् देवान् † [ "मरुतो वै देवानां विशः"–इति श्रुत्यन्तरात्। तान्मरुत्सञ्ज्ञकान्देवान् ] "प्रत्यङ् उदेषि" प्रतिगच्छन्नुदयं प्राप्नोषि ‡। तेषा मभिमुखं यथा भवति तथेत्यर्थः। तथा "मानुषान्" मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथाऽस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा "विश्वं" प्राप्तं "स्वः" द्यां लोकं "दृशे" द्रष्टुं "प्रत्यङ्" उदेषि। यथा स्वर्लोक-वासिनो जनाः स्वस्याभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः [ एतदुक्तं भवति—ये लोकाः

त्वत् प्रकाशेनेति भावः। कीदृशस्त्वं तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः। "अर्त्तिविश्वभ्योऽनिरिति (उणा० २. ९८) तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शतः दर्शनीयः दृशेरतच्॥"—इति वेददीपः।

* "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय मग्निः। तमेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभाति"—इति मुण्डकोपनिषत् २, १०।

† "विशः"—इति, अग्ने जरितरिति व्याख्यायां (१५७ पृ०) प्रजाः। विशोविश इति व्याख्यायां (२४४ पृ०) प्रजाः, यद्वाव इति व्याख्यायां प्रजाः, तत्रैव विशे गृहे इति च। प्रवोमहे इति व्याख्यायां (६६७पृ०) प्रजाः। निघण्टु-द्वितीय-तृतीये मनुष्यनामसु चतुर्थञ्च।

‡ "प्रत्यङ्ङिदं सर्वमुदेषि। प्रत्यङ्ङिदं सर्व मभि विपश्यसीति"—इति निरु० दै० ६, २४।

पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति *। तथाचाम्नायते—"तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात्"—इति ॥ १० ॥ ५१

हे "पावक" सर्वस्य शोधक! "वरुण" अनिष्ट-वारक सूर्य! त्वं "जनान्" प्राणिनः "भुरण्यन्तं" धारयन्तं पोषयन्तं वा इमं लोकं † "येन" ‡ "चक्षसा" प्रकाशेनानु पश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। यद्वा, उत्तरस्या मृचि सम्बन्धः तेन चक्षुसा उदेषीति ¶। तथाच यास्केनोक्तं §—तत्ते वयं स्तुम इति वाक्यशेषोऽपिवोत्तरस्या मन्वयस्तेन व्याख्यातीति ( निरु० दै० ६, २२ )" ॥ ११ ॥ ५२

* "अपि वैतस्या मव१ येनापावक . . . । तेन नो जनानभि वि पश्यसि"—इति निरु० ६, २५-२६।

† "भुरण्युमिति क्षिप्रनाम भुरण्युः शकुनिर्भूरि मध्वानं नयति स्वर्गस्य लोकस्यापि वोढा तत्सम्पाती भुरण्युरनेन पावकख्यानेन भुरण्यन्त जनांस्त्वं वरुण पश्यसि"—इति निरु० दै० ५, २२।

‡ क्वचि तु "येना"—इति पाठः। तत्र द्व्यच इति ( ६, ३, १३५ ) दीर्घः।

¶ "सर्वमेधे पक्ष्याकारेणाग्निश्चीयते तद्रूप मात्मानं सम्पाद्य मुक्तिमाप्नोति तदत्र प्रार्थ्यते—हे पावक शोधक येन चक्षसा दर्शनेन त्वं भुरण्यन्त मनुपश्यसि; क्षिप्रपाती पक्षी भुरण्युः, भुरण्युमात्मानं करोति भुरण्यति, भुरण्यतीति भुरण्यन् तम; क्विबन्तात् शतृप्रत्ययः। सर्वमेधयाजिनं भुरण्युपक्षिरूपात्मानं कृत्वा स्वर्गं गच्छन्तं येन चक्षसानुपश्यसीत्यर्थः। तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः"—इति वेददीपः ४० मा० शा० स० ३३ म० ३१ कं०।

§ "अपिवोत्तरस्यामित्यन्तमेव यास्कं वचनम्।" अन्वयेत्यादित्वर्थसम्बन्धः।

अथ द्वादशी ।

१२ २र ३ १ २ ३ २ ३ १ २ ३ १ २
उद्यामेषिरजःपृथ्वहा* मिमानो अक्तुभिः ।
२ ३ १ २
पश्यञ्जन्मानिसूर्य ॥ १२ ॥ ५३ †

अथ त्रयोदशी ।

१ २ ३ २ ३ २ ३ २ ३ २ २ ३कर र
अयुक्तसप्तशुन्ध्युवंः सूरोरथस्यनप्त्रः ‡ ।
१ २ ३ १ २
ताभिर्यातिस्वयुक्तिभिः ॥ १३ ॥ ५४ ¶

अथ चतुर्दशी ।

३ १ २ २ २ ३ २ ३ १ २
सप्तत्वाहरितोरथेवहन्तिदेवसूर्य ।
३ १ २
शोचिष्केशंविचक्षण ॥ १४ ॥ ५५ §

॥ पञ्चम-दशति ॥

---

* "रजस्पृथ्वहा"—इति च ऋ० पाठः । † ऋ० १, ४, ७, ७ ।
‡ "नप्त्र्यः"—इति ऋ० पाठ । ¶ ऋ० १, ४, ७, ९ ।
§ ऋ० १, ४, ७, ८ ।

२र र ३ २र३र र २ र. १
* हाउरहाउ । सत्याओवा । ३ । दिदीहिविश्वत
२ १ २ र र १ २ २ र र ७र
स्पृथुः । उद्यामेषिरा३जाःपा१र्थ२ । अहामिमानो३
१ २ २ र १ २ २
आक्तूभा२इः । पश्यञ्जन्मानी३सूरा१र्या२ । अयुक्त
१ २ र र १ २ २र
सप्ता३शुन्ध्यु१वा२ः । सूरोरथस्या३नाप्ता१या२ः । ता
र १ २ २ र १ २
भिर्यातिस्वा३युक्ता१इभी२ः । सप्तत्वाहरी३तोरा१था२
२ र १ २ २र र १ २
इ । वहन्तिदेवा३सूरा१या२ । शोचिष्केशंवी३चाक्षा१णा
२र र ३ २र ३र र ३ २ ४
२३ । हाउ३हाउ । सत्याओवा । ३ । सत्या३ओ५वा६५
१ १ १ १ १
६ । ई२३४५ ॥ १५ † ॥

२र र ३ २र ३र र २ र १ २
‡ हाउ२हाउ । ऋताओवा । ३ । दिदीहिविश्वतस्पृ
१ २ र र १ १ २ र र ७र १ २
थुः । उद्यामेषिरा३जाःपा१र्थ२ । अहामिमानो३आक्तू
२ र १ २ २
१भा२इः । पश्यञ्जन्मानी३सूरा१र्या२ । अयुक्तसप्ता३

* तत्र पञ्चम मिदम् (ग्रा० ग्रा० ३, २, २९)।

† ग्रा० गी० ३प० ६, २, १५।

‡ तत्राग्निमं षष्ठ मिदम् ( ग्रा० ग्रा० ३, २, २९ )।

१ २ २ २ १ २ २र र
शून्थ्यू१वा २:। सूरोरथस्या३नाप्ता१या २:। ताभिर्याति
१ २ २ र १ २ २
स्वा३यू क्ता१६भी २:। मन्नत्वाहरी३तोरा१था २इ। वह
र १.२ २र र १ २ २र
न्तिदेवा३सूरा१यां २। शोचिष्के शंवी३चाक्ता१णार३। हाउ
र र ३ २र३र र ३ २ ४ ३ १
हाउहाउ। ऋता३ओवा। ३। ऋता३ओ५वा६५६। ई२
१ ३१
३४५॥ १६ * ॥ ५३॥ ५४॥ ५५

हे "सूर्य !" त्वं "पृथु" सुविस्तीर्णं "रजः" लोकं ["लोका रजांस्युच्यन्ते" †—इति यास्कवचनात्] द्युलोकं "द्याम्" अन्तरिक्षलोकम् "उदेषि" उद्गच्छसि ‡। किं कुर्वन्? अहानि "अक्तुभिः" रात्रिभिः सह "मिमानः" उन्मानयन् [आदित्याधीनत्वादहोरात्र-विभागस्य] तथा "जन्मानि" जननवन्ति भूतजातानि "पश्यन्" प्रकाशयन्॥

"उद्याम्"-"विद्याम्"—इति पाठौ॥ १२॥ ५३

* आ० गा० ३प० ६, २, १६।

† "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते असृगहनी रजसी उच्येते। रजांसि चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति"—इति निरु० ४, १९।

‡ "व्येषि द्यां रजश्च पृथु महान्तं लोकं महान्ति च मिमानोऽहानि अक्तुभी रात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य। " पि बा पर्वस्यामि"—इति यास्कः दै० ६,२१।

"सूरः" सर्वस्य प्रेरकः सूर्यः* "शुन्ध्युवः" शोधिका अश्व-स्त्रियः †। तादृशीः "सप्त" सप्त-सङ्ख्याकाः ‡ "अयुक्त" स्व-रथे योजितवान् ¶। कीदृशीः? "रथस्य" "नप्त्यः" नपातयित्र्यः। याभिर्युक्तो रथो याति न पतति इदृशीरित्यर्थः। एवम्भूताभिस्ताभिरश्वस्त्रीभिः "स्वयुक्तिभिः" स्वकीय-योजनेन रथे सम्बद्धाभिः "याति" यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्य मिति वाक्यशेषः॥ १३॥ ५४

हे "सूर्य!" "देव" द्योतमान "विचक्षण!" सर्वस्य प्रका-

* सूरशब्दः सूर्यार्थोऽत्र सर्वत्र—ऋ० १, २, ४, २—२, १, ४, ४—५, २, ३, ७—उ० ४, १, ८, १ — ४, २, १, १२—५, १, ८, २—५, १, ८, ३—६, १, २, १—६, १, ४, २—९, १, ४, १। सोमार्थस्थानयोरेव—उ० ३, १, ५, १—४, १, २०. २॥

† "शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात् तस्यैव। * * *। * * शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव —इति निरु० नै० ४, १६।

‡ "सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति"—इति निरु० नै० ४, २६। "सप्त युञ्जन्ति रथमेकचक्रमित्यादि निरु० नै० ४, २७। "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"—इति मु० उ० २, १।

¶ "रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते सुषारथिः। कल्याणसारथि रभीशूनां महिमानं पूजयामि मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः"—इति निरु० दै० ३, १६। अपिच—"रथं क्षिप्रं मारुतं मेघं वयं श्रवणीय मावहेयामह या यस्मिन्नस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी"—इति निरु० दै० ५, ५०।

शयितः ! "सप्त" सप्त-सङ्ख्याकाः "हरितः" अश्वाः* रस-हरण-शीला रश्मयो वा† "त्वा" त्वां "वहन्ति" प्राप्नुवन्ति। कीदृशम्? "रथे" अवस्थित मिति शेषः। तथा "शोचिष्केशं" शोचींषि‡ तेजांस्येव यस्मिन् केशा इव ¶ दृश्यन्ते स तथोक्तस्त मिति §॥ ॥ १४ ॥ ५५

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने षष्ठोऽध्यायस्य पञ्चमः खण्डः॥

---

* "हरित आदित्यस्य"—इति अश्वविशेषनामसु निघ० १, १५, ३। "अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा। * * *। तस्याश्ववत् देवतावच्च निगमा भवन्ति"—इत्यादि निरु० नै० २, २७; दै० ४, ३०-३१।

† "सप्त ऋषयः"—इति रश्मिनामसु निघ० १, ५, १२। अत्र च यास्कः "रश्मिर्यमनात्"—इत्यादि निरु० नै० २, १५।

‡ "शोचिः"—इति ज्वलन्नामधेयेषु षष्ठं नैघण्टुकम् १, १७।

¶ "केशी केशा रश्मयस्तैस्तद्वान् भवति काशनाद्वा प्रकाशनाद्वा। तस्यैषा भवति * * *। केशीदं सर्व मिद मभि विपश्यति केशीदं ज्योतिरुच्यत इत्यादित्य माह। अथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यमः। * * *। एक एषा मित्यग्निः पृथिवीं दहति। सर्व मेकोऽभि विपश्यति कर्मभि रादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य"—इति निरु० दै० ६, २५-२६-२७।

§ "सप्तैतानादित्य रश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्व शब्दो यत एतस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्य्ययन्ति परि भुवः परिभवन्ति सर्वाणि कर्माणि वर्ष कर्मणेत्यधिदैवतम्। अथाध्यात्मं सप्त मानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्व शब्दो यान्यस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्य्ययन्ति परि भुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्माणीत्यात्मगतिमाचष्टे"—इति निरु० प० २, ११।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने आरण्यएवाध्येतव्यः
षष्ठोऽध्यायः समाप्तः ॥

॥ समाप्तम् आरण्यम् पर्वं आरण्यकाण्डं वा ॥

॥ इति चतुर्थम्पर्व

॥ सामवेद-संहितायां छन्दआर्चिकः समाप्तः ॥

॥ ओं नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ महानाम्न्यार्च्चिकः ॥ *

(भाष्यकृतोभूमिका)

ऐन्द्रोरथ महानाम्नीः शक्करीर्वा विकर्षिताः ।
पञ्चभिः सहितीं अन्ते पुरीषपदनामभिः ॥
एताः प्रकृतितस्तिस्र उपसर्गैस्तु संयुताः ।
नव सङ्ख्या इति प्राहुर्वेदाध्ययनशालिनः ॥
ऐतरेय-ब्राह्मणेऽपि शस्त्रे षोडशि-नामके ।
तिस्रः प्रोक्ता महानाम्नास्त्रैलोक्यात्मत्ववर्णनात् ॥

---

* महानाम्नीनां पाठस्तु न तु छन्दआर्च्चिके नापि उत्तरार्च्चिके परं छन्दआर्च्चिके समाप्ते तत्पुस्तकान्त्यभाग एव सर्वत्र दृश्यते, एवं मारण्यगाने समाप्ते च ततोऽनन्तरं महानाम्नी-सामपाठस्तत्रैव पुस्तके सर्वत्रेति परिशिष्टत्व माथा मस्यैव प्रायस इति छन्दआर्च्चिकान्ते एव व्याख्यातवान् भगवान् सायणः ।

तत्र हि महानाम्नीनामुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यान्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीयेति । नन्वेताः शक्करीच्छन्दस्का व्याक्रियन्त इत्युक्तास्वेत् षट्पञ्चाशदक्षराः स्युः । तथा च 'समाम्नातं चतुर्विंशत्यादि चतुरुत्तरमिति (पि० ) । अस्यार्थः—गायत्र्यादीनामतिधृत्यन्तानां छन्दसां चतुर्विंशत्यक्षरात्यारभ्य उत्तरोत्तरं चतुर्षु चतुर्षु अक्षरेष्वधिकेषु सत्सु उष्णिगादि-च्छन्दांसि जायन्ते*। एवं क्रमशोऽक्षराधिक्ये सति शक्करी षट्पञ्चाशदक्षरा सम्भवतीति । एता ऋचस्तु शक्करीभ्योऽधिकाक्षरा दृश्यन्ते । तस्मादासामुपसर्गाक्षरैराधिक्यं न तु स्वत इति ज्ञायते । तर्हि के पुनरुपसर्गाः ? के पुनः शाक्कराः पादाः ? इत्युच्यते—

* छन्दांसि | | अतिच्छन्दांसि | | विच्छन्दांसि | 
--- | --- | --- | --- | --- | ---
छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या
१ गायत्री | २४ | १ अतिजगती | ५२ | १ कृतिः | ८०
२ उष्णिक् | २८ | २ शक्करी | ५६ | २ प्रकृतिः | ८४
३ अनुष्टुप् | ३२ | ३ अतिशक्करी | ६० | ३ आकृतिः | ८८
४ बृहती | ३६ | ४ अष्टिः | ६४ | ४ विकृतिः | ९२
५ पङ्क्तिः | ४० | ५ अत्यष्टिः | ६८ | ५ संस्कृतिः | ९६
६ त्रिष्टुप् | ४४ | ६ धृतिः | ७२ | ६ अतिकृतिः | १००
७ जगती | ४८ | ७ अतिधृतिः | ७६ | ७ उत्कृतिः | १०४

प्रथमा। "विदामघवन्विदा"—इति द्विपदा ऋगुपसर्गः। ततः "शिक्षाशचीनाम्पते"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्कराः। ततः "स्वर्णांशुः"—इति पञ्चाक्षरः पादः। अत्राक्षर-विश्लेषेण पञ्चाक्षरत्वं द्रष्टव्यम्। "प्रचेतनप्रचेतय:"—इत्यष्टाक्षरः। एतौ द्वावुपसर्गसञ्ज्ञौ। "इन्द्रद्युम्नायनइष"—इति पादोष्टाक्षरः शाक्करः। "एवाहिशक्रः"—इति पञ्चाक्षर उपसर्गः। "रायेवाजायवज्रिवः"—इत्याद्यास्त्रयः पादाः शाक्कराः। "आयाहिपिबमत्स्व"—इति पादोऽष्टाक्षर उपसर्गः। इत्येव ऋक् प्रथमा॥

अथ द्वितीया। "विद्मारायेसुवीर्यम्"—इति द्विपदा उपसर्गः। "मꣳहिष्ठवज्रिन्नृञ्जसे"—इत्याद्यास्त्रयोऽष्टाक्षराः पादाः शाक्कराः। ततः "अंशुर्नशोचिः"—इति पञ्चाक्षरः पादः। "चिकित्वोअभिनोनय"—इति पादः। एतौ द्वावुपसर्गौ। "इन्द्रोविदेतमुस्तुहि"—इति पादोऽष्टाक्षरः शाक्करः। "ईशेहिशक्रः"—इति पञ्चाक्षरः पाद उपसर्गः। "तमूतयेहवामहे"—इत्याद्यास्त्रयोऽष्टाक्षराः पादाः शाक्कराः। "क्रतुश्छन्द‌ऋतम्बृहत्"—इति पाद उपसर्गः। इत्येवं द्वितीया॥

तृतीयस्याः। "इन्द्रन्धनस्यसातयेहवामहे"—इति द्विपदा उपसर्गः। "सनःस्वर्षत्"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्कराः पादाः। "अंशुर्मदाय"—इति पञ्चाक्षरः पादः। "सुम्नआधेहि

नीवसा"—इत्यष्टाक्षरः पादः। एतौ द्वावुपसर्गौ। "पूर्तिः-शविष्ठशस्यते"—इति पादोऽष्टाक्षरः शाक्करः। "वशीहिशक्रः" —इति पंञ्चाक्षर उपसर्गः। "न नव्य त्र्यसत्र्यसे"—इत्याद्यास्त्रयो ऽष्टाक्षराः शाक्कराः। "शूरोयोगोषुगच्छति"—इति पादौ द्वावुपसर्गाविति तृतीया ऋक् सम्पन्ना ॥

अत्र प्रथमायाः सप्त शाक्कराणि पदानि, पञ्चोपसर्गाः। एवं द्वितीयस्या अपि पदान्युपसर्गाः। तृतीयायास्तु सप्त शाक्कराणि पदानि, षडुपसर्गाः। इत्युक्तार्थो निदानकल्पे सूत्रादिकं सम्यगालोचयद्भिः पूर्वाचार्यैः श्लोकद्वये सङ्गृह्य दर्शितः—

"प्रथमं द्विपदा, त्रीणि शाक्कराणि पदान्यतः।
पञ्चार्णाष्टाक्षरौ चोपसर्गावेकश्च शाक्करः ॥ १ ॥
पञ्चार्ण उपसर्गोऽथ त्रयस्ते वह्निरन्तिमः।
इय माद्या ; द्वितीयैवं ; तृतीया पुनरन्तिमः।
अधिकोऽष्टाक्षरः पाद उपसर्ग इति स्थितिः॥२॥"—इति॥

अत्र सर्वोपसर्गान् परित्यज्य केवल-पदगताक्षर-सङ्ख्यायां कृतायां षडधिकपञ्चाशत्-सङ्ख्याकान्यक्षराणि जायन्ते। अतस्तद् द्वितीया शक्करीति न विरोधः॥ एतासु गीयते साम यत्तच्छाक्कर मुच्यते। तत्पञ्चमेऽह्नि पृष्ठेषु होतुःपृष्ठं विधीयते।

उपसर्गैः संयुताना मासा मिन्द्रोऽधिदेवता।
माध्यन्दिनं यत् सवनं सर्व मैन्द्र मिति स्थितम्॥

अत्रैवाश्वलायनेन स्व-ब्राह्मण मनुसरता कश्चिद्विशेषोऽनुष्टुब् गायत्री सम्पादनादिर्दर्शितः—

"प्रचेतनप्रचेतयायाहिपिबमत्स्व।
क्रतुश्छन्दऋतम्बृहत्सुम्नआधेह्निनोवसः॥"—इति। *

"चिकित्वोअभिनोनयशूरोयोगोषुगच्छति।
सखासुशेवोअद्वयुः॥"—इति। †

गायत्र्यादिरित्येव मादिः एष तु प्रयोग-सौकर्य्यार्थः। अस्माभिस्त्विदानी मर्थ-सौकर्य्यार्थं क्रमेण सोपसर्गा ऋचो व्याख्याताः। ‡

* एषानुष्टुप् सम्पन्ना, अष्टाक्षर-चतुष्पदात्वस्य सम्पादनात्।

† एषा गायत्री सम्पन्ना, अष्टाक्षर-त्रिपदात्वस्य सम्पादनात्।

‡ ग्रन्थकारादयो हि प्रथनीयं व्याख्येयं वा प्रथमं स्व मनस्येव सम्पादयते, ततश्च लेखन्यादिभिः काश्यतेऽतोऽत्र 'व्याख्याताः'—इति भूतप्रयोगो नासाधुः, "कौमुदीयं विरच्यते"—इत्यादावप्येवमेव।

॥ हरिः ओम् ॥

( प्रथमास्तिस्रः )

२ १　२　　३ २ ३ १र　२र　　२ १ १
विदामघवन्विदागातुमनुशꣳसिषो दिशः।
१ २　　３ १　२
शिक्षाशचीनाम्पते पूर्वीणाम्पुरूवसो ॥ १ ॥
३ २उ　३ १ २ ३ २　२
आभिष्ट्वमभिष्टिभिः स्वाऽ३र्न्नाꣳशुः।
१ २　३ १ २ ३ १ ०३ १ २ ३ २
प्रचेतनप्रचेतयेन्द्रद्युम्नायनइषे ॥ २ ॥
३ २उ　३ २　३ १र　२र
एवाहिशक्रोरायेवाजायवज्रिवः
१ २　　３ २ ३ १　२
शविष्ठवज्रिन्नृञ्जसेमꣳहिष्ठ
３ २३　१ २ ३　२३ १ २
वज्रिन्नृञ्जसआयाहिपिबमत्स्व॥ ३ ॥ १

१　　२१र　२　　१　　१र १
* ए२। विदामघवन्विदाः। गातुम्नुशꣳसिषः।
१　२　　　२　५　　१र　１ र २ र र
दाइशा३१उवा२३। ई३४डा। ए२। शिक्षाशचीनाम्प
१　　२रर १र　　१ २　　　२　५　２र
ताइ। पूर्वीणाम्पूरू२। वसा३१उवा२३। ई३४डा। आ

महानाम्नी साम ( आ० ब्रा० ३,१,२९ )।

१ १ २ २ ५ १ र
भिष्ठमभा२इ। ष्टिभिरा३१उवा२३। ई३४डा। स्वर्णं

२ २ ५ १ १र र
शूर:। हा३२उवा२३। ई३४डा। प्राचे। तनप्रचेतया।

१ २ २ १र १ १ १ २ २ १र
इन्द्रा। द्युम्नायना२इषाइ। इडा। इन्द्रा। द्युम्नाय

१ १ १ २ २ १र १
ना२इषाइ। अथा। इन्द्रा। द्युम्नायना२इषाइ।

१ १रर र र र र र २ २ २ २ १
इडा। एवाहिशक्रोरायेराजायवा१जी३वा:। शविष्ठ

२ ४ ५ १ १ १ २
वज्रिन्ना३। जासाइ। मꣳहिष्ठवज्रिन्ना२३हो। जासा३२

१ १११२ १ २ २ १
उवा२३। इटइडा२३४५। आया। हिपिबमा२

१ १ ११२१
त्सुवा। इडा२३४५॥—

तत्र तावदृचम्, प्रथमं द्विपदा माह—"विदामघन्विदागा-तुमनुशꣳसिषोदिश:"—इति। हे "मघवन्" मघं धनं [ मंहते-र्दानकर्मणः *] धनवन्निन्द्र! "विदा:" त्वं विद्धि, अत्र वेदितव्य-कर्म-विशेषस्यानुपादानात् सर्वं जानीहीत्यर्थ: [ विदे: पञ्चम-

* "मंहते"—इति दानकर्मसु पठितम् नैघण्टुके ३, २०।

लकारे रूपम् * ] यतस्त्वं सर्वज्ञः तस्मात् "गातु" यजमान-गन्तव्यं देशं † "विदाः" जानीहि। यद्वा, गातुर्गायतेः स्तुतिकर्मणः ‡ त्वदर्थं क्रियमाणां स्तोतुः स्तुतिं विद्धि। ततो "दिशः" यजमानस्य साधुमार्गेण स्वर्गं गन्तुं मार्गान् "अनु प्रशंसिषः" अनुशंसोऽपदिशं बोधयेति यावत् [ शंसतेः पञ्चम-लकारे ( पा० ३, ४, ७,) रूपम्। अडागमः ¶ ]—अथ मुपसर्गभागः ॥

अथ शाक्करभाग माह—"शिक्षाशचीनाम्पतेपूर्वीणाम्पुरूवसो। आभिष्टमभिष्टिभिः"—इति। हे "शचीनाम्पते" शचीशब्देन कर्म प्रज्ञा वा § "पूर्वीणां" बह्वीनां ‖ शचीनां पते स्वामिन्! हे "पुरुवसो" पुरु प्रभूतं वसु धनं यस्य तस्य सम्बोधनं हे प्रभूतधनेन्द्र! "आभिः" इदानीं क्रियमाणाभिः "अभिष्टिभिः" अभ्येषणाभिः प्रार्थनाभिः स्तुतिभि रस्मदीयाभि

---

* लेटीत्यर्थः ( पा० ३, ४, ७ )।

† "गातुः"—इति पृथिवी-नामसु विंशं नैघण्टुकम् १, १। "गातु यज्ञाय गातु यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति निरु० नै० ४, २।

‡ "गायति"—इति स्तुति-कर्मसु द्वितीयं नैघण्टुकम् ३, १४।

¶ "लेटोऽडाटौ"—इति पा० ३, ४, ९४।

§ "शची"—इति कर्मनामसु द्वाचत्वारिंशत्तमं नैघण्टुकम् ( २, १ ); प्रज्ञानामसु त्वष्टमम् ( ३, ९ )।

‖ "पुरु"—इति बहुनामसु प्रथमं नैघण्टुकम् ३, १।

हेतुभिः "शिच" * [ शिचतिर्दानकर्मा ( निघ० ३, २०, ८ ) ] देहि वसूनीति ] शेषः। पुरुवसो-इति सम्बोधनसामर्थ्याद्वसूनीति लभ्यते॥

अथोपसर्गभाग माह—"स्वर्णांशुः। प्रचेतनप्रचेतये"—इति। स्वः, न, अंशुरिति पदत्रयम्। स्वरादित्यः,† नकार उपमार्थीयः ‡। स्वः, इव [ अंशुः अश्नोतेर्व्याप्तिकर्मणः ( निघ० २,१८,१० ) ] व्याप्तो भवतीन्द्रः। हे "प्रचेतन" प्रकृष्टा चेतना बुद्धिर्यस्यासौ तस्य सम्बोधनं हे प्रशस्तज्ञानेन्द्र ! "प्रचेतय" अस्मदीयां भक्तिमवधारय जानीहि॥

अथोभयभाग माह—"द्युम्नायनइषएवाहिशक्रः"—इति। हे इन्द्र ! "नः" अस्मभ्यं "द्युम्नाय" [ "द्युम्नं द्योततेर्यशोवान्नं वा" —इति यास्कः ( नै० ५,५ ) ] यशसे यद्वा, द्युम्नाय [ धननामैतत् ( निघ० २,१०,१३) धनलाभाय ] "इषे" अन्नलाभाय च भव [ आख्याताध्याहारः। हि शब्दः कारण-परः ] "हि" यस्मात् त्वं "शक्रः" धन-दाने समर्थ एव भवसि। तस्माद्धनादिकं प्रयच्छ॥

---

* मन्त्रे तु "शिक्षा"—इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (पा० ६, ३, १२४) —इति दीर्घः।

† स्वरादित्यो भवति—इत्यादि निरु० नै० २, १४।

‡ "नेति प्रतिषेधार्थीयो भाषाया मुभय मन्वध्यायं नेन्द्रं देव ममंसतेति प्रतिषे-

( द्वितीया त्रिस्त्रः )

३ २ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ २ ३ १ २
विद्माराये सुवीर्य्यं भवो वाजानाम्पतिर्वशाᳬ अनु।
१ २ ३ २ ३ १र २र ३ १ २
मᳬहिष्ठवज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥

अथ शाक्करभागमाह—"रायेवाजायवज्रिवः। शविष्ठवज्रिन्नृञ्जसेमᳬहिष्ठवज्रिन्नृञ्जसे"—इति। हे "वज्रिवः" वज्रवन्निन्द्र! एकोमत्वर्थीयोऽनुवादः। यद्वा, घञः व्रजनं गमनं तद्वान्वज्री। अथवा वज्रायुधं तद्वन्निन्द्र! "राये" धनलाभाय "वाजाय" अन्नलाभाय च प्रसन्नो भवेति शेषः। हे "शविष्ठ" अतिशयेन बलवन्! हे "वज्रिन्" इन्द्र! "ऋञ्जसे" [ऋञ्जतिः प्रसाधनकर्मा (निघ० ३, ५, ८)] अस्माभिर्धनलाभार्थं प्रसाध्यसे। यद्वा, [ऋञ्जतेः पञ्चमे लकारे (पा० ३, ४, ७) रूपम्] प्रसाधय अस्मान्धनादिभिः समृद्धान् कुर्वित्यर्थः। हे "मंहिष्ठ" [मंहतेर्दानकर्मणः] अतिशयेन दानशील पूज्य! वा हे "वज्रिन्" "ऋञ्जसे" अस्माभिः प्रसाध्यसे॥

अथापरभागमाह—"आयाहिपिबमत्स्व"—इति। यस्मादेवं तस्मात् "आयाहि" अस्मदीयं यज्ञं प्रत्यागच्छ। आगत्य च पिब। त्वं सोमं पीत्वा "मत्स्व" हृष्टो भवेति॥ (१-२-२)॥

---

थार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति निरु० नै० १, ४।

योमꣳहिष्ठोमघोनामꣳशुर्न्न शोचिः।

चिकित्वोअभिनोनयेन्द्रोविदेतुमुस्तहि ॥ ५ ॥

ईशेहिशक्रस्तमूतयेहवामहेजेतारमपराजितम्।

सनः स्वर्षदतिद्विषःक्रतुश्छन्द्रऋतम्बृहत् ॥ ६ ॥ २

ए३। विदारायेस्तुवीरियाम्। भुवोवाजानाम्पतिर्वं शाꣳ२। अनुआ३१उवा२३। ई३४डा। ए२। मꣳहि ष्ठवज्रिन्नृञ्जमाइ। यःशविष्ठःशूरारणा३१उवा२३। ई३४ डा। योमꣳहिष्ठोमघोर। ना३१उवा२३। ई३४डा। अꣳशुर्नशोचारइः। हा३१उवा२३। ई३४डा। चाइ। कित्वोअभिनोनया। इन्द्रो। विदेतमू२स्तुहाइ। इडा। इन्द्रो। विदेतमू२स्तुहाइ। अथा। इन्द्रो। विदेतम् २स्तुहाइ। इडा। ईशेहिशक्रस्तमूतयेहवा१मा२हाइ।

२र१र २ ४ ५ १ १
जेतारमपरा३। जाइतांम। मनःस्वर्षदतां२३होइ।
१ २ १ १११११ १ २ २ १
हाइषा३१उवा२३। इट्इडा२३४५। क्रातुः। क्रन्द
१ १ ११११
क्रतारम्बृहात्। इडा२३४५॥

अथ द्वितीयाया ऋचि प्रथमं द्विपदा माह—"विदा राये सुवीर्यम्भुवोवाजानाम्पतिर्वशाँ२ अन्विति। हे इन्द्र! "सुवीर्य" शोभनोवीरः पुत्रः शोभनपुत्रोद्भव-सामर्थ्यम्। यद्वा, शोभनवीर्यं युद्धादिष्वपराजयं "विदाः" लम्भय प्रापय। किमर्थम्? "राये" धनार्थम् धनं रक्षितु मित्यर्थः। "वाजानां" सेनानां बलानां वा "पतिः" स्वामी त्वं "भुवः" भवसि। "वशान्" वशेः कर्मणिर्वशिरण्योरित्यप्रत्ययः। काम्यमानानर्थान् "अनु" अभि लक्ष्य यथाकाम मित्यर्थः। यद्वा वशांस्त्वदधीनान् यजमानान् "भुवः" भावयसि [भवतेः पञ्चमलकारे (पा० ३, ४, ७) रूपम्। "भूसुवोस्तिङि" (पा० ७,४,८८)—इति गुण-प्रतिषेधः॥

अथ स्तीयमाग माह—"मंहिष्ठत्रजिवृञ्जसेयःशविष्ठः शूराणाम्। योमंहिष्ठोमघोनाम्"—इति। हे "मंहिष्ठ" अतिशयेन बलवन्! "यः" च "मघोनां" मघशब्दो धनवाची तद्वतां मध्ये मंहिष्ठः अतिशयेन दाता. तस्म दस्माभिः इनार्थं प्रसाध्यसे॥

अथोपसर्गभाग माह—"अंशुर्न शोचिः। चिकित्वो अभिनोनय"-इति "अंशुर्न" व्याप्त आदित्य इव शोचिर्दीप्तो भवतीन्द्रः [शुच दीप्तौ (भ्वा०, आ०)] शुद्धः [शुचेर्मत्वर्थीयलोपः] शोचिष्मान्। अथ प्रत्यक्षस्तुति—हे "चिकित्वः" चिकित्वन् [मतुवसोरुसम्बुद्धौ छन्दसि (पा०८,३,१)"--इति रुत्वम्] ज्ञानवन्निन्द्र! "नः" अस्मान् अभि लक्ष्य "नय" धनादि प्रापय॥

अथ भागद्वयं मिलित्वाह—"इन्द्रोविदेतमुस्तुहि। ईशेहि शक्रः"—इति। "इन्द्रः" परमैश्वर्ययुक्तः। "विदे" विद्यते सर्वं ज्ञायते "तमु" तमेवेन्द्रं "स्तुहि" स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति। "हि", अस्मात् "शक्रः" शत्रु-हनन-समर्थ इन्द्रः "ईशे" ईष्टे सर्वस्येति तस्मात् तमेव स्तुहीति समन्वयः॥

अथ शाक्करभाग माह—"तमूतयेहवामहे जेतारमपराजितम्। सनःस्वर्षदतिद्विषः"—इति। "तम् इन्द्रम्" "ऊतये" अस्मद्रक्षणार्थं "हवामहे" आह्वयामहे। कीदृशम्? "जेतारं" युद्धेषु शत्रुजयशीलं [ताच्छील्ये तृन् प्रत्ययः (पा०३,२,१३५)]। अतएव अपराजितं न काप्यन्यैः पराजितम्। "सः" इन्द्रः "नः" अस्माकं "द्विषः" द्वेष्टृन् "अति स्वर्षत्" अत्यर्थ मुपतपतु विनाशयतु। स्वृ शब्दोपतापयोरित्यस्मात् पञ्चम-लकारे रूपम्। अथ वा

* "इन्द्रतवर्षयं कर्मणा"—इति निरु० दै० ४, ८।

( तृतीया खण्डः )

२ ३ १ २ ३ १ २ ३ १ २ ३ १ १
इन्द्रन्धनस्यसातये हवामहेजेतारमपराजितम् ।
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
सनःस्वर्षदतिद्विषःसनःस्वर्षदतिद्विषः ॥ ७ ॥
१ २ ३ १ २ ३ १र २र
पूर्वस्ययत्तेअद्रिवोऽशुर्म्मदाय ।
३ १र २र ३ १ २
सुम्नआधेहिनोवसोपूर्त्तिःशविष्ठशस्यते ॥
३ १उ ३ २ ३.१र २र ३ १ २
वशोहिशक्रोनूनन्तन्नव्यऽसन्न्यसे ॥ ८ ॥

स्वरतिर्गतिकर्मा (निघ० २,१४,५४) अस्मान्तः शत्रूनतिगमयतु अतिपारयतु । तथा च बह्वृचाः—"सनःपर्षदित्यामनन्ति ॥

अथोपसर्गभाग माह—"क्रतुश्छन्द ऋतम्बृहत्"—इति । शत्रुहननानन्तरं "क्रतुः" अस्माभिरनुष्ठीयमानं कर्म * । "छन्दः" † गायत्र्यादिकं शस्त्रलक्षणम् । "ऋतम्" उदकं ‡ सोमरस इत्यर्थः । यद्वा ऋतं सत्यभूतं ¶ कर्मफलं तत्सर्वं "बृहत्" प्रभूतमस्त्विति शेषः ॥ (४-५-६) ॥

---

* "क्रतुः"—इति कर्मनामसु एकादशं नैघण्टुकम् २, १ ।

† "छन्दांसि छन्दनात्"—इति निरु० दै० १, १२ ।

‡ "ऋतम्"—इति उदकनामसु षट्षष्ठितमं नैघण्टुकम् १, १

¶ "ऋतम्"—इति सत्यनामसु षष्ठं नैघण्टुकम् ३, १० ।

३१२ २२ ३ १ १
प्रभोजनस्यवृत्रहन्त्समर्य्येषु ब्रवावहै ।
२ ३ २उ ३ १ २ ३ १ २ ३ १ ३ १ २
शूरोयोगोषुगच्छतिसखासुशेवो अद्वयुः ॥ ९ ॥ ३

१ १ २ २ १ १ २ २ २ २
ए२ । इन्द्रन्धनस्यसातयाइ । हवामहेजेतारमप
१ २ २ ५ १ १ २
रा२ । जितमा३१उवा२३ । ई३४डा । ए२ । सनःस्वर्ष
१ १ १ १
दतिद्विषाः । सानःस्वर्षदता२इ । द्विषआ३१उवा२३ ।
२ ५ १२ १ २ २
ई३४डा । पर्वस्ययत्तआ२ । द्रिवआ३१उवा२३ । ई३४
५ २ १ २ ऽ १ २ ५
डा । अᳩप्रुमदाया२ । हा३१उवा२३ । ई३४डा ।
१ १ २ २ २ १ २ २ १ १
सूमनआधेहिनोवसाउ । पूर्त्तीः । शविष्ठशा२स्यताइ ।
१ १ १ २ १ १ १ १ २
इडा । पूर्त्तीः । शविष्ठशा२स्यताइ । अथा । पूर्त्तीः
१ १ १ १ १ १ २ २ २
शविष्ठशा२स्यताइ । इडा । वशोहिशक्रोनूनन्तन्नव्यᳩसा
२ २ २ १२ २ ४ ५ १ २
१न्या३साइ । प्रभोजनस्यवा३ । त्राहान् । समर्येषुब्रवा
१ १ १ १ १ १ १ १ २
२३होइ । वाहा३१उवा२३ । इट्इडा२३४५ । शूरो ।

२र १र　　१　　१　　१　２　२ १र　　१
योगोषुगा२ऋतार्इ । इडा । साखा । सुश्रीवो२स्वयू: ।
१　१ १ १ १
इडा२३४५ ॥—

अथ तृतीयस्या ऋचि प्रथमं द्विपदा माह—"इन्द्रधनस्यसातयेहवामहेजेतारमपराजिम्"—इति । "धनस्य" "सातये" लाभार्थम् । शेषं स्पष्टम् ॥

अथ शाक्करभागं माह—"सनःस्वर्षदतिद्विषः । पूर्वस्ययत्ते अद्रिवः"—इति । "सः" इन्द्रो "नः" अस्माकं "द्विषः" द्वेष्टन् "अति स्वर्षत्" विनाशयतु । येऽप्यन्ये स्वयं द्वेषं न कुर्वन्ति तथापि "द्विषः" अस्माभिर्द्वेष्याः तानप्यति स्वर्षत् [ सर्वत्र हि द्विरेषु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्यादौ द्वेष्टॄणां द्वेष्याणाञ्च विनाशः प्रार्थ्यते ] । हे "अद्रिवः" अद्रयः पर्वताः तद्वन्निन्द्र ! इन्द्रो यतः पर्वतान् भिनत्ति अतः पर्वतेन्द्रयोर्भेद्यभेदकसम्बन्धः* । यद्वा आदृणात्यसुररक्षांसीति वा अन्यैः स्वयं न दीर्यते प्रहत इति वा अद्रिर्वज्रः तद्वन्निन्द्र ! "पूर्वस्य" पुरातनस्य "ते" तव "यद्" धनं मस्ति तदस्मभ्य माहरेति शेषः ॥

अथापरभागमाह—"अंशुर्मदायसूत्रआधिहिनोवसः"—इति । हे इन्द्र ! योऽयम् "अंशुः" सोमलताखण्डः तज्जन्यः सोमरस इत्यर्थः [ जन्ये जनकव्यवहारः ] स च "मदाय" भवति ।

---

* "तत्रोपमार्थेन यद्धवर्णा भवन्ति"—इति निरु० नै० २, १६ ।

यस्मादस्माभिर्दत्तः सोमः तव मदाय भवति तस्मात् हे "वसो" निवासहेतो इन्द्र! "नः" अस्मान् "सुम्ने" सुखे धने वा* "आ-धेहि" स्थापय॥

अथ स्तोत्रपरभागौ सहैवाह—"पूर्तिःशविष्ठशस्यतेवशीहिशक्रः"—इति। हे "शविष्ठ" बलवत्तमेन्द्र! तव "पूर्तिः" त्वदीयं धनपूरणं दान मित्यर्थः। "शस्यते" सर्वैः स्तूयते। "हि" यस्मात् "शक्रः" समर्थ इन्द्रः "वशी" सर्वस्य नियन्ता खलु। यद्वा, "वशी" वसुविषय-स्वीकारवान्। अतएव "शक्रः" दाने शक्तिमान्। तस्मात्ते दानं स्तूयते॥

अथ शाक्करभाग माह—"नूनन्तन्नव्यं सन्यसे। प्रभोजनस्य वृत्रहन्तत्समर्येषुब्रवावहै"—इति। हे "प्रभो" सर्वस्य जनस्य स्वामिन्! हे "वृत्रहन्" वृत्रो मारकः शत्रुः तद्धननवान् शत्रु-घातिन्†। "नव्यम्" नूतनं‡ वली-पलितादि-लक्षणेन पुराणत्वेन वर्जितं तमिन्द्रं त्वं "नूनम्" अवश्यं "सन्यसे" अहं सम्यक् नितरां प्रक्षिपामि। अस्मिन् कर्मणि हविषो भोक्तृत्वेन स्थापयामीत्यर्थः [असु क्षेपणे (दि०प०)। व्यत्ययेनात्मने पदम् (पा०३,१,-८५) विकरण-लुक् च। सह सुपेत्यत्र सहेति योगविभागात् सन्नि-

* "सुम्नम्"—इति सुखनामसु षोडशं नैघण्टुकम् ३, ६।

† "वृत्रो मेघ इति नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः"—इति निरु०नै० २,१६।

‡ "नव्यम्"—इति नूतननामसु चतुर्थं नैघण्टुकम् ३, २८।

भ्या मुपसर्गाभ्यां सह समासः । यद्वा, हे इन्द्र ! नव्यम्-इति क्रिया-विशेषणम् नूतनम् अन्यै रचित-पूर्वं यथा भवति तथा "नूनम्"-इदानीं "सव्यसे" अस्माभिः सेव्यसे । षण सम्भक्तौ (स्वा०प०) । ...कि रूपम् । "छन्दस्यनेक मपि साकाङ्क्षम् (पा० ८, १, ३५)—त्याख्यातस्योदात्तत्वम् । किञ्च । "अर्येषु" अर्थेषु प्राप्तव्येषु यज्ञादिषु कर्मसु "सम्प्रवावहै" त्वञ्चाहञ्चावां सम्भाषां करवावहै । सर्वस्य यजमानस्येन्द्रसाक्षात्कारो भवति तमर्थं द्योतयितु मेकत्र सहवदन मित्यर्थः ॥

अथोपसर्गभाग माह—"शूरोयोगोषुगच्छतिसखासुशेवोअ-द्वयुः"—इति । य इन्द्रः "शूरः" समर्थः [ गोषु निमित्त-सप्तमी (बा० २,३,३७) ] "गोषु" गवार्थं युद्धादिषु शत्रुभ्यो गवान-यनार्थं गच्छतीत्यर्थः । कीदृशः ? "सखा" समानख्यानः सखि-वदत्यन्तस्निग्धः । अतएव "सुशेवः" शोभन-सुखः अक्लेशेन सुखकरः । "अद्वयुः" द्वयरहितः सत्यानृतवर्जितः केवल-सत्य-स्वरूप इत्यर्थः । यद्वा । यद्वन्द्वं मनसि वचसि क्रियायां वान्यत् कार्यं मिति तद्रहितः । अथवा एतत्सदृशो द्वितीयो नास्तीत्य-द्वयुः [मत्वर्थीय उप्रत्ययः] अपिच । एताभ्यां यजमानेन्द्रयोः सम्भाषा-प्रकारोऽभिधीयते । हे इन्द्र ! "यः" यजमानोऽस्ति सोऽयं गोषु दक्षिणारूपेण दातव्यासु उदारः सन् प्रवर्तते, सर्वा अपि ददातीति । यद्वा, गोषु आश्रयण-चोरानयनार्थं गच्छ-

( पञ्च पूरीषपदानि )

३ २ ऽऽऽऽऽ ऽ२३१ २ ३१ २
एवाह्योऽ३ऽ३ऽ३वएवाऽह्यग्नेएवाहीन्द्र।
३ १२ २र ३ १२ २र
एवाहिपूषन्एवाहिदेवाः ॥ १० ॥ ४

१ २ २ २ १ १ १ १ १ १ १ २र
आइवा। हियेवा२३४५। होइ। हो। वाहा३१
२ ५ १ २ २ १ १ १ १ १
उवा२३। ई३४डा। आइवा। हियग्ना२३४५इ। हो
१ २र २ ५ १ २ २
इ। हो। वाहा३१उवा२३। ई३४डा। आइवा। हि
१ १ १ १ १ १ १ २ २ ५
इन्द्रा२३४५। होइ। हो। वाहा३१उवा२३ इ३४डा।
१ २ २ १ ऽऽऽऽ १ १ २र
आइवा। हिपूषा२३४५न्। होइ। हो। वाहा३१
२ ५ १ २ २ र १ १ १ १ १
उवा२३। ई३४डा। आइवा। हिदेवा२३४५ः।
१ १ २र २ ५
होइ। हो। वाहा३१उवा२३। ई३४डा॥ १॥

तीत्येवं मदीयं गुणं त्वं देवेषु ब्रूहि। अहमिन्द्रोऽयं स्तोत्रेषु सखा सन् सुखकरो भवतीत्येवं त्वदीयं गुणं मर्त्येषु स्तोतृषु ब्रवीमीति। एवमृचो व्याख्याताः॥ (७८-८)॥

अथ पुरीषपदानि व्याख्यायन्ते—तानि सर्वाण्यैन्द्राण्येव तद्गुण-योगात्तत्रत्यतृतीयपदेन वाग्न्यादिपदैरिन्द्र एव * सम्बोध्य स्तूयते ॥

तत्र प्रथमं पद माह—एवाह्येवेति । हे "इन्द्र !" त्वम् "एव + हि" एव मुक्तगुणोऽसि खलु । यद्वा, एव शब्द इण्-गतौ (अदा०प०)—इत्यस्मात् "इणशीभ्यावतीति वन्प्रत्ययान्तः । सुपो लुक् (पा० ७,१,३९) । अस्मदीयं यज्ञं प्रत्येव आगन्ता भवेति शेषः । एवेति पुनरुक्तिरादरार्था ॥

अथ द्वितीयं पद माह—एवाह्यग्नइति । हे "अग्ने" अग्रस्य नेतः देवानां पुरतो गन्तरिन्द्र! एतद्गात्मक वा इन्द्र ! "एव हि" एवं गुणयुक्तः खलु यज्ञं प्रत्यागन्ता त्वं भव ॥

अथ तृतीयं पद माह—एवाहीन्द्रेति । हे "इन्द्र" परमैश्वर्ययुक्त! यद्वा, इन्धे प्रकाशयति तेजसा भूतानीतीन्द्रः । अथवा इदं सर्वं जगत् प्रथम मपश्यदितीन्द्रः। तथाच ऐतरेयोपनिषदि श्रूयते—"इद मदर्श मिति ।" तस्मादिन्द्रो

* "एकरूपा मित्यग्निः पृथिवीं दहति सर्वंलोकांभि विपश्यति कर्मभिरादित्योगति-रेकस्य दृश्यते—इति निरु० दै०.५, २७ ।

† मन्त्रे तु "एवा"—इति "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घः ।

‡ "इम मेवाग्निं महान्त मात्मान मेक.मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्र वरुण मग्निं दिव्यञ्च गरुत्मन्तम्"—इति निरु० दै० १, १८ ।

नामेन्द्रो ह वै नाम तमिन्द्रं सन्त मिन्द्र इत्याचक्षते परोक्षेणेति। तादृशम् "एव हि"॥

अथ चतुर्थं पद माह—एवाहिपूषन्निति। "पूषन्" विश्वस्य पोषक एतद्रात्मक वा इन्द्र! * एव मुक्तगुणः खलु त्वम्॥

अथ पञ्चमं पद माह—एवाहिदेवाइति। हे "देवाः" इन्द्रादयः! यद्वा सर्वदेवानां बलरूपेण इन्द्रस्यावस्थानात् † इन्द्र एव बहुत्वेन सम्बोध्यते। हे "इन्द्र"! एव मुक्तगुणः खलु त्वम्। यद्वा, एवशब्दात् सुपांसुलुगिति ( पा० ७,१,३९ ) जसो लुक्। अस्मदीयं यज्ञं आगन्तारो भवतेत्यर्थः॥ (१०)॥ १

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने महानाम्नी-व्याख्यानं समाप्तम्॥



॥ सामवेदसंहितायां महानाम्न्यार्च्चिकः समाप्तः॥

* "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति"—इत्यादि निरु० दै० ६, १६।
† "या च का च बलकृतिरिन्द्रकर्म्मैव तत्"—इति निरु० दै० १, १०।

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ छन्दआर्चिक-परिशिष्टम् ॥ *

अथवा

## ॥ अथ अरण्यगानम् ॥ †

### ॥ हरिः ॐ ॥

२ १र २ २ ५ २र

‡ यद्यावई। द्रता३१उवा२३। श्या२३४ताम्। द्या

२ ५ २ १ र ५ २

द्या३१उवा२३। ई२३४डा। शतम्भूमीः। उता३१उवा

---

* यद्यप्ययं भागो न आर्चिकग्रन्थस्य ऋग्लक्षणशून्यत्वात् प्रत्युतास्य ऋङ्मूलकगानत्वमेव स्फुटम् परमेतन्मूलऋचस्तु छन्दस्यार्चिके दृश्यतेऽतस्तस्यैव परिशिष्टमिति व्यवह्रियतेऽस्माभिः, ऋग्गानात्मकस्यास्य सामवेदीय-मन्त्र-भागस्य व्याख्याने ऋगंशस्यैव प्राधान्यात् भाष्यकारादिभिस्तथैव व्यवहारात्; गानग्रन्थानेव प्रधानीकृत्यांच प्रकाशेऽप्रवृत्तत्वाद् ऋक्परिचय-पूर्वकस्यैव गानपरिचयस्य न्याय्यत्वाच्च। न सन्ति चेह अमुतासां साम्नां कतिपयानामृचः, तेषां स्तोभमात्र-मूलकत्वात्; तेऽखिलस्तोभाः सायणादिभिर्व्याख्याता भवेत्यथापि न ज्ञायते परं मुद्रितपुस्तकेऽनधीतमस्माभिरार्चिकपद-ग्रन्थाध्ययनात् प्रागेवेति तमपि विच्छिद्य यथास्थानमिह दर्शयिष्ये।

† अरण्ये गेयत्वादस्य पूर्वप्रदर्शितगेयगानात् पार्थक्यमरण्यगानमित्यभिधेति च।

‡ "षष्टो वैरूपाणि। वाजसवैरूपम्"—इति सा० ब्रा० ३, २, ८।

५ ५ २र ३ ५ १
२३। सौ२३४यूः। हाहा३१उवा२३। ई२३४डा। न
१र २ १ र २ ३ ५ २र
त्वावज्रिं त्सहस्रꣳसू। रिया ३ १उवा २ ३। आ२३४नू। हा
३ ५ १ र २
हा३१उवा२३। ई२३४डा। नजातमाष्टरो३। आउ।
१ ३ ५ २र ० १ १११११
वा२३। दा२३४सौ। हाहा३१उवा२३। इट्इडा२३४५ ॥१॥
१र २ १ १ १२ २१र र२१ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।
१ र १ २१ र १ १
नात्वावज्रिन्। सहस्रꣳसूरिया २आनू२। नाजा२त
१ २१ १ ३ ५र र १
मा। ष्टरो२३। दा२सा२३४औहोवा। दिशंविशꣳह
१ र २ १ १ ११११
स्। अस्माशिशूंमतो३। इट्। इडा२३४५ ॥ २ ॥
१ र २ र १ १र २१ र र २१ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।
१र १ १र ५ २ १ र २
औवा२। हꣳ२। ३। औवा३। हाउवा। नत्वावज्रिं

* "स्वया च"—इति आ० ब्रा० ३, २, ८। वैरूपमिति शेषः।
† "पञ्चनिधनम्"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

१ २ १र२र १ २ १र १ १र ऽ २
सहस्र सूर्य्या अनु । ओवा २ । ह २ । ३ । ओवा३ । हा
१र
उवा । नजातमष्टरोदसी । ओवा २ । ह २ । ३ । ओ
ऽ २ १ १र १
वा३ । हाउवा । दिशंविश हम् । ओवा २ । ह
१र ऽ २ १ र २ र १र
२ । ३ । ओवा३ । हाउवा । अश्वाशिप्रुमती । ओवा
१ १र ऽ ३ ११११
२ । ह २ । ३ । ओवा३ । हाउवा३ । इट्इडा२३४५ ॥३॥

१ र २ र १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम् । ए । शतम्भूमीरुत । स्योवा ।
२ऽ ऽ ऽ १ र २ १ २ १र२र १ २ऽ
हाउहाउहाउवा । नत्वावज्रिन्त्सहस्र सूर्य्या अनु । हा
१ र २ १र २र २ऽ १
उ३वा । नजातमष्टरोदसी । हाउ३वा । दिशंविश
२ऽ १ र २ र २ऽ २
हस् । हाउ३वा । अश्वाशिप्रुमती । हाउ३वा । यु
१ २ र १ र २ऽ १ ११११
वतिस्वकुमारिणी । हाउ३वा३ । इट्इडा२३४५ ॥ ४ ॥

१ र २ र १ १र ३ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम् । ए । शतम्भूमीरुत । स्योवा ।

---

* "पक्षिधनम्"—इति ब्रा० ३,२,८ । वैरूपमिति शेषः ।

† "सप्तनिधनम्"—इति ब्रा० ३,२,८ । वैरूपमिति शेषः ।

२ऽ १ र २ १ २ १र२र १ २ऽ
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳ सूर्य्या अनु। हाउ३वा।
१ र २१र २र २ऽ १ २ऽ
नजातमष्टरोदसी। हाउ३वा। दिशंविशꣳ हस्। हा
१ र २ र २ऽ १र २ऽ
उ३वा। अश्वाग्निप्रुमती। हाउ३वा। सूवः। हाउ
१र २ऽ १ १ १ १ १
३वा। ज्योतिः। हाउ३वा३। इट्इडा२३४५॥ ५॥

१ र २ र १ १र २ १ र र २ १ १ऽ
* यद्यावइन्द्रतेशतग्। ए। शतम्भूमीरुत। स्त्रोवा।
२ऽ १ र २ १ २ १र १र १ २ऽ १
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳ सूर्य्या अनु। हाउ३वा। न
र २१र १र २ऽ १ २ऽ
जातमष्टरोदसी। हाउ३वा। दिशंविशꣳ हस्। हाउ३
१ र २ र २ऽ २ १ १र १ र
वा। अश्वाग्निप्रुमती। हाउ३वा। युवतिस्वकुमारिणी।
२ऽ १र २ऽ १र २ऽ
हाउ३वा। सूवः। हाउ३वा। ज्योतिः। हाउ३वा३।
१ १ १ १ १
इट्इडा२३४५॥ ६॥

१ र २ र १ १र २ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्त्रोवा।

---

* "बह्वानिधनम्"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

† "द्वादशनिधनम्"—इति आ० ब्रा० ३,२,८। वैरूपमिति शेषः।

ओहद्दाउद्दाउ । ओहद्दाउवा । मत्वावज्रिन्त्सहस्रिय्

र्य्याअनु । ओद्दाओद्दा । ओद्दाओद्दा । ओद्दाओद्दा

३ । द्दाउवा । नजातमष्टरोदसी । ओहद्दाउद्दाउ ।

ओहद्दाउवा । दिशंविश्र्ऋष्वस् । ओद्दाओद्दा । २ ।

ओद्दाओद्दा ३ । द्दाउवा । अश्वाम्रिभ्युमती । ओह

द्दाउद्दाउ । ओहद्दाउवा । मूवाः । ओद्दाओद्दा । २ ।

ओद्दाओद्दा३ । द्दाउवा । ज्योतिः । ओहद्दाउद्दाउ ।

ओहद्दाउवा । इडा । ओद्दाओद्दा । २ । ओद्दाओद्दा

३ । द्दाउवा । इट् । इडा । ओहद्दाउद्दाउ । ओहद्दाउ

वा३ । द्यौ३ । आ३ । ऊ३ । ई२३४५ ॥ ७ ॥

* यद्यावइन्द्रतेशतम् । ए । शतम्भूमीरुत । स्युरवा ।

* "पुष्पम"—इति आ० ब्रा० १,१,८ वैकल्पमितिमेधः ।

१र ३र र १ र २र ३र २ १ र २ ३ ५
हाओवा। २। ऊवे। हाओवा। ऊवे। हाओ२३४वा।
१ र र १ २ १र २र १ २र ३र र १ र २र
नत्वांवज्रिन्तसहस्रꣳसूर्य्याअनु। हाओवा। ३। ऊवे। हा
१र र १ २ २ ३ ५ १ र २ १र २र
ओवा। २। हुवे। हाओ२३४वा। नजातमष्टरोदसी।
२र ३र र १ र २र ३र र १ र १ ३र २ १
हाओवा। ४। हुवे। हाओवा। ४। नाजातमष्टरोदसा
२र १ ३ ५ २र ३र र १ र २र ३र
इ। ऐहोइ। आ२३४इहो। हाओवा। ५। हुवे। हाओ
र २ऽ ऽ ऽ १ ऽ २ऽ ३ १ १ १ १
वा। ५। हैहैहैहोवा३। हाउवा३। ऊ२३४५॥ ८॥

एतेषां व्याख्यानम्—१भा० ५७१ पृष्ठे द्रष्टव्यम्। १—८

२र र २ १ ऽ २र र १र
* हाउपिबासुता। स्यरसि। नाः। औहोहोवा२।
१ २ १ र २ १र २र र १र १ २
इहा। मत्स्वानइन्द्रगोम। ताः। औहोहोवा२। इहा।
२र १ र २र १र २र १ २र र १र १ २
आपिर्नोबोधिसधमाद्योवृ। धाइ। औहोहोवा२। इहा।
१र १ २र र १र १ २ २ १ १
अस्माꣳअ। वा। औहोहोवा२। इहा। तुताइ। धा

* "अस्मरिचे द्वे"—इति ब्रा० ब्रा० ३,१,८। तत्र पर्वमिदम्।

२या२३४औहोवा। सुष्टुभस्तुभोश्वाशिश्रुमक्रा३न। इट्

इडा२३४५ ॥ ९ ॥

* पिबासुता। स्यरसिनः। मत्स्वा२नाई २। आ। औ३

होवाहाउवा३। ई३४डा। द्रगोमतः। आपिर्नोबो२।

आ। औ३होवाहाउवा३। ई३४डा। धिसन्धमाद्येवृधे।

आस्मा२१अवा२। आ। औ३होवाहाउवा३। ई३४डा।

तुताइ। धा२या२३४औहोवा। विष्टुभस्तुभोश्वाशिश्रुम

क्रा३न्। इट्इटा२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ४९६-४९७ द्रष्टव्यम्

† हाउ। होइया। ३। पावो। चन्ताई। वितता३

ब। ह्मणस्पा२३३ताइ। प्राभूः। गात्रा। णी३परि

* "अन्नरिक्षे द्वे"—इति आ० ब्रा० ३,२,८। तत्रोत्तरमिदम्।

† "अरिष्टे द्वे"—इति आ० ब्रा० ३, १, ८। तत्रपूर्वमिदम्।

१ १२ ३ ५ ४ ५ १ २ १
याइ। षिवाइश्वार२३४ताः। आता। प्रता। नूइर्न

२ १र १र २ ३ ५ ४ ५ १ १ २
तदा। मोअस्रू२३४ताइ। शार्त्ता। सआइत्। वद्दन्तः।

१ २र ३ ५ ३र २र ३ र ३र ५४५ ५र
सन्तदाशार२३३ता। हाड़ु। होइया। ३। होइडा।

३
२। हो२३४५इ। डा॥ ११॥

३र २ १ १ १ ४ ५ १ १ २
* हाडु। हौ३४५। ३। पावी। चन्ताइ। वितता

१ २ ३ ५ ४ ५ १र २ १ २ १
३म्ब्रह्मणस्पा२३४ताइं। प्राभूः। गात्रा। णी३परियाइ।

४ ५ १ २ १ २ १र १र २ ३
षिवाइश्वार२३४ताः। आता। प्रता। नूइर्नतदा। मोअस्रू

५ ४ ५ १ १ २ १ २र ३
२३४ताइ। शार्त्ता। सआइत्। वद्दन्तः। सन्तदाशार२३४

५ ३र २ १ १ १ ३र ५४५ ५र ३
ता। हाडु। हौ३४५। ३। होइडा। हो२३४५इ।

डा॥ १२॥

अनयोर्व्याख्यानम्—२भा० १०० पृष्ठे द्रष्टव्यम्। ११,१२.

---

* "चरिष्ठे"—इति षा० ब्रा० ३, २, ८। तत्रोत्तरमिदम्।

१ २ २र १र २र १ १ २ १
* हावाभी। त्वापूर्व्वपीत। याइ। इहाइ। हाउ
२ ५ २ १ २र १ २ ३र २ १ १ २
वा३। बृ२३४हात्। इन्द्रास्तोमाइ। भिरायवाः। इहा
२ २ ५ २र १ २र १ २ ३
३। हाउवा३। बृ२३४हात्। समाइचीना। सक्र
२ १ १ १ १ २ २ ३
भवाः। समा२स्वरान्। इहाइ। हाउवा३। बृ२३४
५ २ १ २ १ २र २ १ १ २ २ ३
हात्। रुद्रागृणा। तपूर्वियाम्। इहाइ। हाउवा३। बृ
५ २र २ १
२३४हात्। ए। बृहत्॥ १३॥

१ ५ २ १र र र १ २ २
† अभीहाउ। त्वांपूर्वपीतयाइ। इह। हा३१उवा
३ ५ १ र र र १ २ २
२३। सू२३४वाः। इन्द्रस्तोमेभिरायवाः। इह। हा३१
३ ५ ३ र २र १र
उवा२३। सू२३४वाः। समी। चीनासक्रभवःसंमस्वरान्।
१ २ २ ३ ५ २ १र र
इह। हा३१उवा२३। सू२३४वाः। रुद्रागृणन्तपूर्विया-

† "अभ्यर्चीते द्वे"—इति आ० ग्रा० ६,२,८।

१ २ २ ३ ५ २ १
म। पूद्द। हाउ१उवा२३। सू२३३वाः। ए३। सुवा
१ १ १ १
२३४५ः॥ १४॥

अनयोर्व्याख्यानम्— १भा० ५१८ पृष्ठे द्रष्टव्यम्। १३,१४

२र र १ १ २ १ऽ २ऽ
* हाउपिबासुता। स्यरसिनाइः। होइ। ३। हाउ
१ र १ र २ १र २ १ २ऽ
३वा। सहोनरः। मत्स्वानइन्द्रगोमताइः। होइ। ३। हा
२ १ र २र १ र २र १ २ १
उवा। सत्यमोजः। आपिर्नोबोधिसधमाइ। होइ। ३।
२ऽ १ र २ र १ २ १ २ऽ
हाउ३वा। स्वर्ज्योतिः। दियेवृधे३। होइ। ३। हाउ
२र १र २ १र २ १ १ २ १
३वा। एस्यादिदम्। ३। अस्मा२अवन्तुतेधियाइः। हो
२ऽ १र २र १र २ २र
इ। ३। हाउ३वा। द्यौरक्रान्भूमिरततनत्समुद्र२समचू
१ १ १ १ १
कृपत्। इ। इडार२३४५॥ १५॥

अस्य व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम्। १५

२र २ १ २ १
† हाउ३। बृहात्। ३। बृहत्। ३। बृहात्। ३।

---

* "वरुणस्य देवस्थानम्"—इति ता० ब्रा० ३, ३, ९।

† "बृहद्देवस्थानम्"—इति ता० ब्रा० ३, ३, ९।

बृहदिन्द्रायाऽगाया१ता २। मरुतोवृत्राऽहान्ता१मा २म्। येनज्योतिरजनयन्दृऽतावा१द्वो २ः। देवन्देवाया३जागृ१वी २३। हाउ३। बृहात्। ३। बृहत्। ३। बृहात्। २। बृहा३१उ। वा २। ए। बृहत्। ३॥ १६॥

अस्य व्याख्यानम्—१भा० ५३४ पृष्ठे द्रष्टव्यम्। १६

* ऐराया २त्। ३। ऐराया२३त्। सुवरा३४। हा होइ। पुनानःसोमाऽधारा१या २। अपोवसानोऽआर्षा१सी २। आरत्नधायोनिमृतस्या३साइदा१सी २। उत्सो देवोहो३राण्या१या २ः। ऐराया २त्। २। ऐराया२३त्। सुवरा३४। ह्राहा३४। औहोवा। ए३। देवांदिवाज्यो तो२३४५ः॥ १७॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम्। १७

† हावोहोहाउ। अभित्वावाषा३भासुताइ। अभि

*,† "ऐरयैरिणे द्वे"—इति ब्रा० ब्रा० ३, २, ६।

त्वावा। षम्भासुताइ। अभित्वावार्षाइभासुताइ। औहो
हावौहो २। सुतᳫँहजामीइपीतयाइ। सुतᳫँहजा। मो
पीतयाइ। सुतᳫँहजामीइपीतयाइ। हावौहोहाउ।
तृम्पाविया३स्व३होमदाम्। तृम्पाविया। स्वहोमदाम्।
तृम्पावियास्व३होमदाम्। औहोहावौहो २। उहुवा
३हाउ। वा३। हस्॥१८॥

अस्य व्याख्यानम्—१भा० १६८ पृष्ठे द्रष्टव्यम्। १८

* हाउ३। हौवाओ२३४वा। हाहा३१उवा२।
पुनानःसोमधारया। अवोवृहद्दिहाइडा। अपोवसानो
अर्षसि। अवोवृहद्दिहाइडा। आरत्नधायोनिम्तस्यसी
दसि। अवोवृहद्दिहाइडा। उत्सोदेवोहिरण्ययः। अवो
वृहद्दिहाइडा। हाउ। ३। हौवाओ२३४वा। हाहा३१

* "आङ्गिरसेद्वे"—इति आ० ब्रा० ७, २, ९। तत्र पूर्वमिदम्।

१ २ १ २१र २१र २१र २र १ र २
उवा २। सुवर्ज्योतिर्महस्पृथिव्यादिवमाशक्तमधाजिनीय

१ १ १ १ १ ११
मंम। हस्। इटइडा२३४५॥१९॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम्। १९

२र र र र र र र र १र २र १ २
* औहोवाऔहोवाऔहो३वा। तवेदिन्द्रावमंवसु।

१ २ १ २१र २ १ २र १
त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्यपरमस्यराजसि। नं

२र १र २ र २र र र र र र र र १
किष्ट्वागोषुवृण्वते। औहोवाऔहोवाऔहो३वा। सुवं

२ २१र२र १ २र १ २१र २र १ र २१ १ २
र्ज्योतिर्देवानामवसावयंशक्तमवाजिनीयमम्। सुवर्ज्योतिर्म

१ २१र २१र १ २१ १ ११
हस्पृथिव्यादिवमा। हस्वृहन्नमा२३४५:॥२०॥

१र २र १र २ २ १ २ ५र र
† औहोऔहो३वा। ३। इडा२३भिरा३४। औहोवा।

१र २र १ २ १ २ १ २१र २
तवेदिन्द्रावमंवसु। त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्य

१ २र १ २र १र २ र १र २र १र २
परमस्यराजसि। नकिष्ट्वागोषुवृण्वते। औहोऔहो३

* "आङ्गिरसे द्वे"—इति ग्रा० ग्रा० ६, २, ९। तयोरुत्तरमिदम्।

† "बार्हस्पत्यम्"—इति ग्रा० ग्रा० ३, २, ९।

२ १ २ ५र र १र र २ १
वा। ३। इअर३भिरा३४। औहोवा। इडासुवोबृहन्नमा
१ १ १ १
२३४५ः॥ २१॥

अनयोर्व्याख्यानम्—१भा० ५५७ पृष्ठे द्रष्टव्यम्। २०,२१

२र २र र र र र २र
* हाउ। ३। औहोआत्वासहस्रमाशताम्। हाउ
२ १ २ २र २ १ २
३। युक्तारा१आ२३इ। हाउ। ३। हिराण्या१या२३इ।
२र १ २ २र १ २
हाउ। ३। ब्रह्मायू१जा२३ः। हाउ। ३। हारयइ।
२ १ २ २र १ २ २र
इकाद्दुआ१इना२३ः। हाउ। ३। वहान्तु१सो२३। हा
२र र ३ २ १ ऽ ५ ५ ५
हाउहाउ। मपी३ः ता२३४याइ। उहुवा३हाउ। वा।
१
हस्॥ २२॥

अस्य व्याख्यानम्—१भा० ५०७ पृष्ठे द्रष्टव्यम्। २२

२ र र र र र र २र र २ र
† उहुवाओहा। औहोवा। शन्नोदेवीः। उहुवा।
र र १र ३र २ २ १ ३ २ १ २
ओहा। औहोवाहाउ। वा। आवन्। अभिष्टा२३या

* "भारद्वाजम्"—इति षा० ब्रा० ३, ९, ९।

† "आथर्वणम्"—इति षा० ब्रा० ३, २, ६।

२ र र र २र र र २ र २ र
३इ। उहुवाओहा। औहोवा। शन्नोभवा। उहुवा
र र १र ३र २ १ २ २ १र २
ओहा। औहोवाहाउ। वा। हृदः। तुपीता२३या३
२ र र र २र र र २ र २ र र
इ। उहुवाओहा। औहोवा। शंयोरभो। उहुवाओ
र १र ३र २ २ १ २ २ १ २
हा। औहोवाहाउ। वा। ज्योतिः। सुवन्त२इनाऽ३ः।
२ र र र १र ३र २ २ ३ १ १ १ १
उहुवाओहा। औहोवाहाउ। वा३। ई२३४५॥ २३॥

अस्य व्याख्यानम्—१भा० १४३ पृष्ठे द्रष्टव्यम्। २३

२४ (चतुर्विंशतितम) साम २भा० १४४ पृष्ठे मुद्रितम्।

०र २ १ २र १ २ १ र २
*हाउ। ३। बृहद्दामम्। ३। बृहत्पार्थिवम्। ३।
२ १ २ १ २ २ १ २ १ २र १
बृहदन्तरिक्षम्। ३। बृहद्दिवम्। ३। बृहद्दामम्। ३।
२ र १ २ २र र र १ २
कयानश्चि२त्रा१आभू१व२त्। ऊतीसदावृ३धाःसा१खा२।
२ र १ २ २र २ १ २र १
कयाशचिष्ठा३यावा१र्त्ता२३। हाउ। ३। बृहद्दामम्।
२ १ र २ २ १ २ १ २ २ १
३। बृहत्पार्थिवम्। ३। बृहदन्तरिक्षम्। ३। बृहद्दिवम्।

---

* "बृहतीवामदेव्ये द्वे"—इति आ० ब्रा० ३, ३, ९। तत्र पूर्वमिदम्।

२ १ २र १ २ १ र १र ३र २ २
३। बृहद्दामम्। २। बृहद्दामम्। औहोवाहाउ। वा।
र २ १२र १ २र २ १ र २र १ २र २र १र र
ए। बृहद्दामम्। ए। बृहद्भोवामम्। ए। वामेभ्यो
२र १ २र २र १ २र १ २र १
वामम्। ए। वामम्। वामम्। वामम् ॥२५॥

३ २ १ २ ३ २ १ २ २ १र
* बृहद्दामम्। २। बृहद्दामम्। कयानश्चाइ।
३ ५ २र १ २ १ १ २ ३ ५ २
त्राऽ२भूर२३४वात्। ऊताइसदा। वाईःसा२३४खा। क
१र ७ ३ ५ ३ २ १ २ ३ २
याशचाइ। ष्ठयाऽ२वा२३४र्त्ता। बृहद्दामम्। २। बृहत्।
१र २ ५ २ २र २ १ २र १
वामा३उवा। ए। बृहद्दामम्। ३ ॥ २६ ॥

अनयोर्व्याख्यानम्—१भा०३८४पृष्ठे द्रष्टव्यम्। २५,२६

२र र र र २ २र १र र
† औहोइत्वामिद्धिहवामहा३ए। सातौवाजा।
१ २ ३ ५ १ २ ३र ४र ५ २ १
स्याकाराऽ२३४वाः। तुवा३४। औहोवा। वृत्राइषुवा
१ २ १ २ ३ ५ १र र
इ। द्रासा३१त्। पतिन्ना२३४राः। त्वाङ्काष्ठा३४।

---

* "बृहतीवामदेव्ये"—इति भा० ब्रा० ३, ९, ९। नवोक्तमिदम्।

† "भरद्वाजस्य बृहत्"—इति भा० ब्रा० ३, २, ९।

३र ४र ५ १ ५ ५ २
औहोवा । स२अर्वा२३४ । ताः । उहुवा६हाउ ।
५ १
वा । हंस ॥ २७ ॥

अस्य व्याख्यानम्—१भा०४८९ पृष्ठे द्रष्टव्यम् । २७

॥ इति ग्रामे अरण्यगाने प्रथमस्यार्द्धप्रपाठकः ॥

---

॥ हरिः ॐ ॥

६ २ १ २ १ २र १ २र३४ ५
* इया३होइ । ३ । इन्द्रन्नरो । ने३मधि । ताहवन्ताइ ।
२ १र २ १ २ ३ ४ ५ २र१र २ १
यत्पारियाः । युनज । ताइधियस्ताः । शूरोनृषा । ता३श्रव ।
२ ३ ४र ५ २र १र १ १र २र ३ ४ ५ ३ २
संस्वकामाइ । आगोमताइ । व्रजेभ । जातुवन्नाः । इया
१ ६ २ १ ३ ५र र २ १ १
३होइ । २ । इया३होर । यार३४औहोवा । ई २ ३
१ १
४ ५ ॥ १ ॥

३र २र ३ र २०१ र १ २र ३ ४ ५
† औहोइया । ३ । इन्द्रन्नरो । ने३मधि । ताहवन्ता
२ १र २ १ २ ३ ४ ५ २र१र २
इ । यत्पारियाः । युनज । ताइधियस्ताः । शूरोनृषा । ता

† "वसिष्ठ जमदग्नो स्तको द्वावगस्त्य-जमदग्नोर्वा"—इति आ० ब्रा० ३,२,१० ।

३अव। संश्वकामाइ। आगोमताद्। व्रजेभ। जातुव न्नाः। ओहोइया। २। औहो३४५याई५ई। ई२३४५ ॥२॥

अनयोर्व्याख्यानम्—१भा० ६४२—पृष्ठे द्रष्टव्यम्। १.२

*न्ययामायाम्। २। अयामायाम्। स्वादिष्ठ या२। मदाईष्ठा२३४या। पवस्वसो२। मधारा२३४या। इन्द्रायपा२। नवाइसू२३४ताः। अयामायाम्। २। अयांम्। आ२। या२३४। औहोवा। ई२३४५॥ ३॥

अस्य व्याख्यानम्—१भा० १०पृष्ठे द्रष्टव्यम्। ३

† हाउ। ३। औहोवाणहियाहाउ। धार्त्ता। दाइ वःपवतेक्त्वियः। रसोरसो। रसः। हाउ। ३। औ होवाणहियाहाउ। द्दात्ताः। दाइवानामनुमादियः। नृभीर्नृभीः। नृभीः। हाउ। ३। औहोवाणहिया

* "स्वाशिरामर्कः"—इति. ग्रा० ग्रा० ३, २, १०।

† "दीर्घतमसोऽर्कः"—इति ग्रा० ग्रा० ३, २, १०।

र १ २ १ र २र र १ २ १ २ १ २
हाउ। हारी। साजामोअत्योनस। त्वभीस्त्वभीत्वभीः।
१र २र र र र र १ २ १ २ १ र
हाउ। ३। औहोवाणहियाहाउ। वार्था। पाजाꣳ
२ र र १ २ १ २ १ २ २र २र र
सिक्रणुषेनदी। षुवाषुवा। षुवा। हाउ। ३। औहो
र र २ २ ३ १ १ १ १
वाणहियाइहाउ। वा३। ई२३४५॥ ४॥

अस्य व्याख्यानम्—२भा० १८४ पृष्ठे द्रष्टव्यम्। ४

२र २ र १ २ १ २
* हाउ। ३। प्रवइन्द्रायबृहाताइ। हाताइ। २।
१र र १ २ १ २ २र
हाउ। ३। मरुतोब्रह्मअर्चाता। चाता। २। हाउ।
२ र १ २ १ २ २र
३। वृत्रꣳहनतिवृत्रहाशतक्रातुः। क्रातुः। २। हाउ
२ र १ २ १ २ २ऽ
३। वज्रेणशतपर्वाणा। र्वाणा। २। हाउ। ३।
२ १ १ १ १
वा३। इडा२३४५॥ ५॥

२र २ र ३र १ र २
† हाउ। ३। सन्त्वांनोनवुः। ३। अनोनवुः। ३।
२ १ १ २र २ र १ २ १
मरुतः। ३। विश्वस्मात्। ३। प्रवइन्द्राम्यबृहाताई। हा

* "मरुतामर्क्को द्यौ"—इति आ० ब्रा० ३, २, १०।

† "संम्लोभो योभरः"—इति आ० ब्रा० १, २, १०। मरुतामित्येव।

ताई। २। मरुतोब्रह्मअर्चाता। चाता। २। वृत्र७ह

नतिवृत्रहाशतक्रातूः। क्रातूः। २। वज्रेणशवपर्वाणा।

र्वाणा। २। हाउ। ३। सन्त्वानोनवुः। अनोनवुः।

३। मरुतः। ३। विश्वास्मात्। २। वाइश्वस्मा२३४

औहोवा। ई२३४५॥ ६॥

अनयोर्व्याख्यानम्—१भा० ५३२पृष्ठे द्रष्टव्यम्। ५,६

* होहोवा। ई। इया। ३। अग्निमूर्द्धादीऽवाःका१

कू२त्। पतिःपृथिवीऽयाआ१या२स्। अपा७रेता७सीऽ

जाइन्वा१ती२। होहोवा। ई। ईया। २। होहोवा।

ई। ई२। या२३४। औहोवा। ए। अग्निमूर्द्धाभव

द्दिवः॥ ७॥

अस्य व्याख्यानम्—१भा०१३५ पृष्ठे द्रष्टव्यम्। ७

---

* "अग्ने रर्कः"—इति आ०ब्रा० ३,१,१०।

१ २ १ २ १ र २ ४ ५ १र
* होवा। ईया। औ२३होआ३। आयाम्। पूषा
३ २ ३ ५ ४ ५ १ २र २ ३
२। रयिर्भा२३४गाः। सोमाः। पुनार२। नोअर्षा२३
५ ४ ५ १ ३ २ ३ ५ ४ ५
४तो। पातीः। विश्वार२। स्वभूमा२३४नाः। वाया।
१ ३ २ ३ ५ १ र १ र १
स्वद्रोर२। दमोऊ२३४भाइ। होवा। ईया। औ२३
र २ ५र र ३ ४ १ १ १ १
होआ३४। औहोवा। ई२३४५॥ ८॥

अस्य व्याख्यानम्—२भा० १५५ पृष्ठे द्रष्टव्यम्। ८

९, १०, ११ सामानि—२४६, २४७, २४८ पृष्ठेषु मुद्रितानि।

१ १ २ १ १ २ १
† पातौ२ः। ३। दिवश्चा। पातौ२ः। ३। अन्तरि
२ १ १ १र २ १ १
क्षस्या। पातौ२ः। ३। पार्थिव। स्या। पातौ२ः। ३।
२ १र र २र १ १ १ २ र १
अपामोषधी। नाम। पातौ२ः। ३। विश्वस्यभूत।
१ १ १ १ ३ २र र
स्या। पातौ२ः। पातौ२३ः। पा२ता२३४। औहोवा।
२र १ २ १ २र १ २ १ २ २१ १ २ १र
ए। पतिर्दिवः। ए। पतिरन्तरिक्षस्य। ए। पतिःपार्थि

* "प्रजापतेरर्कः"—इति आ० ब्रा० ३, २, १०।

† "अर्कग्रीवाश्च"—इति आ० ब्रा० ३, ३, १०।

२ ३र १ १ १र र २र र २र १ २ १ २ र १
वस्य। ए। पतिरपामोषधीनाम्। ए। पतिर्विश्वस्यभूत

२र १ र ३ १ १ १ १
स्य। ए। सुवर्ज्योतीर२३४५:॥ १२ ॥

अस्य मूलं न ऋक्, अपि तु स्तोभः, सचैषः—

१ २र ३ २ ३ १ २ १ २र ३
पतिः। दिव। अन्तरिक्षम्। स्य। पार्थिवस्य। अ

२ १ २र १ २र ३ १ २र
पाम्। औषधीनाम्। औष। धीनाम्। विश्वस्य।

३ १ २ १ २ १ २र १ २र
भूतस्य। आयुः। चक्षुः। ज्योतिः॥ १ ॥ ६ ॥ १२ ॥

१२ साम २भा० २४९ पृष्ठ मुद्रितम्।

१ १ २ ३ २ १ १ २
* इय। होइ। इयइयई३या। इय। होइ। इय

३ २ १ १ २ ३ २ २ १
इयई३या। इय। होइ। इयइयई३या। इन्द्रन्नरो।

२ १ २र ३ ४ ५ २ १र २ १ २
ने३मधि। ताद्धवन्ताइ। यत्पारियाः। युनज। ता

३ ४ ५ २र १र २ १ २ ३ ४र ५
इधियस्ताः। शूरोनृषाः। ता३श्रव। संश्वकामाइ।

२र १र २ १र २र ३ ४ ५ १ १
आगोमताइ। व्रजेभ। जातुवन्नाः। इय। होइ।

* "अर्कं पुष्पं इं"—इति आ० आ० ३, २, १०। तत्र पूर्वमिदम्।

२ ६ २ १ १ २ १ २
इयइयईश्या । २ । इयहौइ । इयइय । ई२ । याई३४ ।
५र र ३ १ १ १ १ १
औहोवा । ई२३४५ ॥ १४ ॥

१ १ २ ६ २ २ १
* उव । होइ । उवउवुऊश्वा । ३ । इन्द्रनरो ।
२ १ २र ३ ४ ५ २ १र २ १ २ ३ ४
नेश्मधि । ताहवन्ताइ । यत्पारियाः । युनज । माइधिय
५ २र १र २ १ २ ३ ४र ५ २र १र
स्ताः । प्तूरोनृषा । ताश्रव । संश्वकामाइ । आगो
२ १र २ र ३ ४ ५ १ १ २
मताइ । व्रजेभौ जातुवन्नाः । उव । होइ । उवउ
६ २ १ १ २ १ २
वऊश्वा । २ । उव । होइ । उवउव । ऊर । वा२३४ ।
५र र ३ १ १ १ १
औहोवा । ई२३४५ ॥ १५ ॥

अनयोर्व्याख्यानम्— १भा० ६४२ पृष्ठे द्रष्टव्यम् । १४,१५

२र ३र ३ ४र ५ ३र १र
† हाउ । ३ । आंज्यदोहम् । ३ । मूर्द्धामन्दायि ।
२ १ २ ३ ४ ५ २र १र २ १ र २र २
वा३अर । तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जात

---

* "अर्क पुष्पे द्वे"—इति आ० ब्रा० ३,२,१० । तत्र द्वितीयमिदम् ।

† "वैश्वानरस्य त्रीण्याज्यदोहान्याज्यदोहानि वा"—इति आ० ब्रा० ३,२,११ । तत्र प्रथम मिदम् । ज्येष्ठसामाज्यदोह मिति वैदिकसङ्केतः ।

४ ५ २ १ २ १ २ ३ ४र ५
मग्नींम्। कवि॒ꣳसम्रा। जा३मति। थिञ्जनानाम्।
२र १ २ १ २ ३ ४र ५ २र २र ३
आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। आज्य
४र ५ २र ३ ४ ५ २र २र १ २
दोहम्। २। आज्यदो५हाउ। वा। ए। आज्यदोह
२र २र १ ३ १ १ १ १
म्। ए। आज्यदोहा२३४५म्॥ १६॥

२र २र १ २ २र १र
*हाउ। ३। ऊम्। चिदोहम्। ३। मूर्द्धानन्दा
२ १ २ ३ ४ ५ २र १र २ १ र
इ। वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ।
२र ३ ४ ५ २ १ २ १ २ ३ ४र ५
जातमग्नीम्। कवि॒ꣳसम्रा। जा३मति। थिञ्जनानाम्।
२र २ १ २ ३ ३र ५ २र २र
आसन्नःपा। आ३ञ्जन। यन्तदेवाः। हाउ। ३। ऊमचि
१ २ २ १ २ २ ३ २ २ ३ १ १
दोहम्। चिदोहम्। चिदो३हाउ। वा३। ई२३
१ १
४५॥ १७॥

२र १ २ २र १र २
†हाउ। ३। च्योहम्। ३। मूर्द्धानन्दाइ। वा३

* ई-निधन माज्यदोह मिति वैदिक-सङ्केतः।
† ऋत-निधन माज्यदोह मिति च वैदिक-सङ्केतः।

१ २ ३ ४ ५ २र १र २ १ र २ ३ ४ ५
अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ। जातमग्नी

२ १ २ १ २ ३ ४र ५ २र
मः। कविंसम्रा। जा२मति। थिञ्जनानाम्। आ

१ १ १ २ ३ ४र ५ २र १
सन्नःपा। त्रा२ञ्जन। यन्नदेवाः। हाउ। ३। ओ

२ १ २ २ २ २ १
हम्। २। ओ२हाउ। वा२। ए३। ऋतम्॥१८॥

एतेषां व्याख्यानं—१भा० २०५ पृष्ठे द्रष्टव्यम्। १६-१८

२र १र र २ १ र २ र १र १ २
* सुरूपकृत्नुमूतये। ३। सुदुघामिवगोदुहे। जुहूम

२ २र १ २ २र १ २
साइ। द्यविद्यवाइ। २। द्यविद्यवा२१उ। वा२३।

१ १ १
उम्। उम्। उम्॥१९॥

अस्य व्याख्यानम्— १भा० ३६६ पृष्ठे द्रष्टव्यम्। १९

२र १ २ १ १
† हाउ। ३। आयि। ही। ३। आयि। ३। इया

२ २ १र र १ २ ३ ४ ५ २ १र
हाउ। ३। पिबासोमाम्। इन्द्र। मन्दतुत्वा। यन्ते-

---

* "इन्द्रस्य त्रय ऋषभा रैवतो वैराजः शाक्वर इति"—इति ब्रा० ब्रा० ३,२,११।
तत्रेदं रैवतऋषभम्।

† वैराजऋषभमिदं द्वितीयम्।

२ १ २ ३ ४ ५ २र १ र २ १
सुषा। वा३हरि। अश्वअद्रीः। सोतुर्बाहु। भ्या३९सुय।
२र ३ ४ ५ १र १ २ १
तानअर्वा। हाउ। ३। आयिही। ३। आयि। ३।
१ २ १ ८ २ २ ३ १ १ १ १
इयाहाउ। २। इया३हाउ। वा३। ई२३४५॥ २०॥

अस्य व्याख्यानम्—१भा० ८१५ पृष्ठे द्रष्टव्यम्। २०

२ १र र र र र र र २ १ २
* ओ३१म्। ३। स्वादोरेइत्थाएविषूएवतआ। म्र
१र १ र र १ र र र र २ १ २ १
योः। २। मधोरेपिबाएन्तिगोएरियआ। हविः। २।
र र र र र र र र २ ८ १ र र र
यआएन्द्रेणाएसयाएवरिया। सुवः। २। वृष्णाएमदा
र र र २र १ १र १ र र र र र र
एन्तिशोएभथा। आं। ज्योतिः। २। वस्वोरेअनूएस्वराए
२ १ २ २ ५ १
जियमा। ओ३१म्। २। ओ३१२३४। वा। इट्इड़ा
१ १ १ १
२३४५॥ २१॥

अस्य व्याख्यानम्—१भा० ८१३ पृष्ठे द्रष्टव्यम्। ११

२र र २र १ र र १
† एषुरोजिती। वोअन्धसःसुतायमादया२ईत्नवा

---

* शाकूर ऋषभमिति तृतीयम्।

† "इन्द्रस्य चैषो ऽतीषङ्गः यथापरं रौद्र"—इति षा० ब्रा० ३,२,११।

१ १ २ २र १र १ १
यि । इडा । ऊवा । तेजानमा२न्धसाः । अथा ।
१ २ २ १र १ १ १ २ २
दायिवो । सङ्कमिया २ददायि । अथा । ऊयम् । प्र
१ १ १ १ र २ २
ममचा २यि । अवाः । अथा । अप्रस्वानं अथा१इष्टा३
२ १ र र र १ १ २ १
ना । सखायोदीर्घजार२३चोयि । क्रायमा३१उवा२३ । इट्
१ ११ १
इडा२३४५ ॥ २२ ॥

अस्य व्याख्यानम्—२भा० ६पृष्ठे द्रष्टव्यम् । २२

१ २ १र र १ १ १
* एआसा । जिवक्रारथ्ये यथा २जाउ । इडा । आ
२ २ १ १ १ १ २ २१र र
सा । व्यप्रुर्मदा २या । अथा । धाया । मनोताप्रथ
र १ १ २ २ २१र १
मामना २यिषा । इडा । आपृष्ठ । दक्षोगिरा २इष्टाः ।
१ १ २ २ १र र र १ १
अथा । दाशा । सुसारोअधिसानो २अव्यायि । इडा ।
१ २ २ १र १ १ १ २ २ १
श्याइनो । नयोनिमा २स्सदात् । अथा । मार्जा । तिव
र ऽ १ १ १११
क्रि सदनेषुवा२च्छा३१उ । वा२३ । इटइडा२३४५ ॥ २३ ॥

अस्य व्याख्यानम् —२भा० २४पृष्ठे द्रष्टव्यम् । २३

* "इन्द्रस्य वयोऽतिषङ्गाः अथापरं ० ०, वासवः"— इति आ० ब्रा० ७,२,११ ।

१ २ २ १ १ २ १
* एआभी । नवन्तआ२ । इहआ३१उवा२ । त

२ २र १ २ २ १ १ २
रत्समन्दीधावति । प्रायम् । इन्द्रस्यका२ । मियमा३१

१र र २ १ र २ १ २ २ १र
उवा२ । धारासुतस्यान्धसः । वात्सम् । नपूर्वआ२ ।

१ २ १ र २र १ २ १
यंनिया३१उवा२ । तरत्समन्दीधावति । जातम् । रि

१ १ २ १ १ १ १ १
हन्तिमा२ । तरआ३१उवा२३ । इटइडा२३४५ ॥ २४ ॥

अस्य व्याख्यानम् -- २भा० ५६ पृष्ठे द्रष्टव्यम् । २४

३र २ ३ ५ १र र३ र १र
† हाउ । हौवाओ२३४वा । ३ । ए । औहोहोवा

२ २ १र र २ १र २ १ र र १ २र १ २ १र
हाउ । वा । इडा । धर्त्तादिवःपवतेकृत्व्योरसः । इ

र १ र १र १र र २ १र २र १ २ १र र १
डा । २ । दक्षोदेवानामनुमाद्योनृभिः । इडा । २ । ह

२ र १र २र १ २ १र र १ २र १र र २
रिःसृजानोअत्योनसत्वभिः । इडा । २ । वृथापाजांसि

* "इन्द्रस्य चयोऽतिषङ्गाः अथापरं ००,००, पार्ज्जन्यो वैश्वदेवो वा"—इति ब्रा० ब्रा० ३,२,१६ ।

† "प्राजापत्याश्चत्वारः पदस्तोभा गौतमा वा वैश्वामित्रा वैन्द्राग्ना वा"—इति ब्रा० ब्रा० ३,२,११ । अग्डपदस्तोभ मिदं प्रथम मिति वैदिकसङ्केतः ।

क्ष्णुषेनदीषुवा१। हाउ। हौवाओ२३४वा। ३। ए। औहोहोवाहाउ। वा। ईडा॥२५॥

* हाउ। ३। हौवाओ२३४वा। ए। औहोहोवा हाउ। वा। धर्त्तादिवःपवा। ईडा। तेक्तव्योरसः। ईडा। दक्षोदेवानामनुमाद्योनृभिः। ईडा। हरिः सृजानआ। ईडा। त्योनसत्वभिः। ईडा। वृथापाजांसिक्ष्णुषेनदीषुवा१। हाउ। ३। हौवाओ२३४वा। ए। औहोहोवाहाउ। वा। ईडा॥ २६॥

† औहोहोवा२। ओवा२। ए। औहोहोवाहाउ। वा। धर्त्तादिवःपवा। ईडा। तेक्तव्योरसः। दक्षोदेवानामा। ईडा। नुमाद्योनृभिः। हरिःसृजानआ।

---

* षड्विंशपदस्तोभ मिदं द्वितीय मिति वैदिकसङ्केतः।

† चतुर्विंशपदस्तोभ मिदं तृतीय मिति वैदिकसङ्केतः।

१र र २र १ २ १ २र१र र २ र १र र १
इडा। त्योनमत्वभिः। वृथापाजाᳲसिक्। इडा। औ
२र १र १र २र १र र ३र २ २ २
होहोवा२। ओवा२। ए। औहोहोवाहाउ। वा। णु
र १र र
षेनदीषुवा१॥ २७॥

२ ३र ४ ५ २र १र र ३र २ २
* आऔहोवाहाइ। ए। औहोहोवाहाउ। वा।
१ १र १ १ २ र १ २ १२ १र
धर्त्ता। दी२। वःप। वा। तेकृन्व्यः। रसः। दत्तो
२र१र र २ १र २र १ २ १र र १ २ २र १र
देवानामनुमाद्योनृभिः। इडा। हरिः। सा। जानोअ।
२र १ १ २ १ २र१र र २ र १र २
त्योन। सत्वभिः। वृथापाजाᳲसिक्रणुषेनदीषुवा१।
२ ३र ४ ५ २र १र र ३र २ २
आऔहोवाहाइ। ए। औहोहोवाहाउ। वा।
१र र
इडा॥ २८॥

एतेषां व्याख्यानम--२भा०१८४पृष्ठे द्रष्टव्यम्। २५—२८

॥ इति ग्रामे अरण्यगाने प्रथमः प्रपाठकः॥



* द्विरिड पदस्तोभ मिदं चतुर्थ मिति च वैदिकसङ्केतः।

॥ हरिः ॐ ॥

१ २ २र र १२
* अभाइमाह्वे । ३ । चर्षणीधृतम्मघवान्नाउमूक्था१या
२ र र १ १ ३र र
२म् । इन्द्रङ्गिरोबृहतीरभ्याउनूषा१ता२ । वावृधानं
र १ २ २ र १
पुरुहूतꣳसूउवाक्ती१इभीः २ः । अमर्त्यञ्जरमाणन्दी३वाइ
२ १ २ १ १ ३
दा१इवे २ । अभाइमाह्वे । २ । अभा२३इ । मा२ । हो
१र र १२१ १११११
२३४ । औहोवा । सर्पसुवा२३४५ः ॥ १ ॥

२ १ २ २ र र
† अभिप्रमꣳहोउराइमाह्वे । ३ । चर्षणीधृतम्मघवा
१ २ २ र र १ १
नाउमूक्था१या२म् । इन्द्रङ्गिरोबृहतीरभ्याउनूषा१ता२ ।
२र र र १ २ २ र
वावृधानम्पुरुहूतꣳसूउवाक्ती१इभी२ः । अमर्त्यञ्जरमाण
१ २ २ १ २
न्दीउवाइदा१इवे २ । अभिप्रमꣳहोउराइमाह्वे । २ । अ-

---

* "इमा संसर्पाणि महासर्पाणि सर्पसामानि वा । अथापरमग्न आ (सर्पमिति शेषः)। * * * अथापरं वाभ्रवाणि चत्वारि ( तत्र प्रथममिदम् )"—इति आ० ब्रा० ३,६,१२।

† "पृथिव्याश्च ( सर्पमिति शेषः )। * * * अथापरं वाभ्रवाणि चत्वारि ( तत्र द्वितीयमिदम् )"—इति आ० ब्रा० ७.२.१२।

१ १ ३ ५र र
भिप्रम(ँ)होइरा२३इ। मा२। हा२३४। औहोवा।
१ ११ ११११
प्रसर्पसुवा२३४५: ॥ २ ॥

२5 २ र १ २ १ र २१ २5
* हाउ३वा। चर्षणीधृतम्मघवानमुक्थ्यम्। हाउ
१ र २ १र २र २5 १र र
३वा। इन्द्रङ्गिरोवृहतीरभ्यनूषत। हाउ३वा। वावृधा
२ र१ १२ १ २5 १ २ १ २र
नम्पुरुहूत(ँ)सुवृक्तिभिः। हाउ३वा। अमर्त्त्यञ्जरमाण
१र २र २5 १ २१ ११११
न्दिवेदिवे। हाउ३वा। उत्सर्पसुवा२३४५: ॥ ३ ॥

एतेषां व्याख्यानं—१भा० ७६८ पृष्ठे द्रष्टव्यम्। १—३

२5 १ २ १ २ १र २र १
† हाउ३वा। सुवः स(ँ)सर्पन्तः। तवेदिन्द्रावमंवसु।
२5 २ १ १ २ १ २ १
हाउ३वा। सुवः स(ँ)सर्पन्तः। त्वम्पुष्यसिमध्यमम्।
२5 १ २ १ २ २१र २ १ २र
हाउ३वा। सुवः स(ँ)सर्पन्तः। सत्राविश्वस्यपरमस्यराजसि।
२5 १ २ १ २ १ २र १र ३ र २5
हाउ३वा। सुवः स(ँ)सर्पन्तः। नकिष्ट्वागोषुवृण्वते। हाउ-

* "वायोस्त्र"—इति ब्रा० ब्रा० ३,२,१२। सर्पमिति शेषः। किन्तु "अथापरं वाभ्रवाणि चत्वारि"—इति ब्रा० ब्रा० ३, २, १३। तत्र तृतीयमिदम्।

+ "अन्तरिक्षस्य"—इति ब्रा० ब्रा० ३,२,१२। सर्पमिति शेषः। किन्तु "अथापरं वाभ्रवाणि चत्वारि"—इति ब्रा० ब्रा० ३,४,१२। तत्र चतुर्थमिदम्।

